श्रीः

अनङ्गहर्षापरनाम श्रीमात्रराजप्रणीतम्

# तापसवत्सराज नाटकम् ।



श्रीयदुगिरियतिराजसंपत्कुमाररामानुजमुनिभिः

प्रत्यवेक्षितम्



तदाज्ञया मुद्रितम्



( कल्यब्दाः ५०२८ )

पुस्तकोपलब्धि स्थानम्

यं० सि० तिरुमलाचार्यः

आसूरि श्रीनिवासय्यङ्गार् ।

६ प्रधानरस्ता-मल्लेश्वरं

बेङ्गलूरु

---

*Copies can be had from :—*

M. C. TIRUMALACHAR,

or

A. SRINIVASA AYYANGAR

6, MAIN ROAD MALLESWARAM,

BANGALORE.

INDIA.

J. Kuppuswami

## FOREWORD.

As in our Archaeology some ancient relic throwing light on the history and civilization of the past is unearthed now and again by our savants, so in our literature one more classic has been recovered from obscurity by the endeavours of the scholar and divine, **His Holiness Sri Yadugiri Yathiraja Sampathkumara Ramanuja Muni.**

" **Tapasa Vatsaraja**" of Anangaharsha, evidently well-known in early times to Indian *literati*, had vanished from the reach of scholars in recent years. Students of Sanskrit knew of it only through a stray reference or quotation in ancient works on Sanskrit Poetics. In Hemachandra's '*Kavyanusasana*," Bhoja Deva's "*Saraswaty-Kanthabharana*," Mummata's "*Kavya-prakasa*," Abhinavagupta's "*Dhwanilochana*," and Ananda Vardhana's "*Dhwani*"—all of them works of the 11th and 10 centuries,—"Tapasavatsaraja" has been quoted from, in illustration of principles of Dramaturgy.

Some twenty years ago the present Editor came across the quotations in Abhinavagupta's "*Dhwanilochana*," and later on across further references in the works of other dramatic critics. But the whereabouts of the original work itself remained a mystery. Recently however in Professor Susil Kumar De's edition of "*Vakrokti Jeevita*" it was stated that a manuscript of the play was to be found in a library at Berlin.

Working on that clue, His Holiness got into touch with Dr. F. O. Schraeder of Bonn and Dr. Noble of the Preussische Staasbibliothek, and ultimately Dr. Noble was kind enough to transcribe and send him a copy of the original manuscript which was in a Kashmeri script. The original was not perfect; its first and last leaves were damaged, and the writing was full of mistakes.

However, by the combined efforts of the two German and Brahman enthusiasts, this ancient and valuable play has been saved from destruction and is placed before the readers, to relish, to dissect, and to digest. It is a very pretty and popular love story, and is written with a facile literary skill. It is now placed before the world of literary critics, to diagnose its merits, and assess its values, both literary and historic. Their warm thanks are due to His Holiness and to Dr. Noble for their efforts in bringing the play into light and securing its permanence.

MYSORE, INDIA,
16th Jan. 1929

G. R. JOSYER, M.A., F.R.E.S.,

# AN APPRECIATION

BY

**Mahamahopadhyaya Dr. Ganganatha Jha,** M. A., D. LITT.,

Vice-Chancellor, Allahabad University.

" The revered Swamiji left with me a copy each of the ‡ शृङ्गारप्रकाश and the * तापसवत्सराज. I have looked into the books and am herewith appending my appreciation. "



‡ शृङ्गारभासं नृपभोजनिर्मितं सन्मुद्रितं स्वामिवरेण्ययत्नतः ।
आस्वाद्यचांशेन समस्तबन्धसंस्वादनायोल्लसतीव मानसम् ॥

* श्रीमत्तापसवत्सराजचरितन्नाट्यप्रबन्धोद्धृतं ।
नानाभावविभावनादिरुचिरं विद्वत्प्रमोदावहम् ॥
श्रीमत्स्वामिवरप्रयत्नबलतः सुश्रीकमुद्राङ्कितं ।
दृष्ट्वाऽऽस्वाद्य रसप्रमोदमधुरं हृष्टः सतां सेवकः ॥

## PREFACE.

Only one manuscript of the drama on the "*King of Vatsa who turned an ascetic*" has until now found its way into a public library, viz., the one acquired in Kashmir by the late Professor Hultzsch and now preserved in Berlin in the Preussische Staatsbibliothek where it is No. 2166 of the Indian manuscripts described by Weber. A photographic copy of this manuscript was obtained, through Mr. M. C. Tirumalachar of Bangalore, who wrote to me for it, by **His Holiness Sri Yatiraja Swami of Melkote** (Mysore), and on it is based the present *editio princeps.*

Considering the faultiness of this sole manuscript, where the Prakrit passages are in an almost hopeless condition, one cannot help admiring the boldness of His Holiness and might even question the usefulness of his undertaking. However, the drama, though perhaps of little artistic value, is of considerable interest for the history of Sanskrit literature : first of all, with regard to the Bhasa problem, i. e., because of its connection with the Brhatkatha ( *Kathasaritsagara,* etc. ) on the one, and the *Ratnavali* and *Svapnavasavadatta* on the other hand (see Hultzsch's paper "*Ueber das Drama Tapasavatsaraja*" in "Nachrichten der Koeniglichen Gesellschaft der Wissenschaften zu Goettingen", 1886, and Felix Lacote, " La source de la Vasavadatta de Bhasa" in Journal Asiatique, 1919) ; then as belonging to the material used by Anandavardhana for his much-admired Dhvanyaloka and extensively quoted by his commentator, the great Abhinavagupta ( cf. Hultzsch, Loc. Cit. ) ; and thirdly, because of its age, it being evidently earlier than the second half of the ninth century ( do ).

Thus, then, even this imperfect edition wanting both beginning and end is likely to be welcomed by all lovers of Sanskrit

literature. But the list of errata is painfully long, and some other errors ( such as श्रुत्वा for स्मृत्वा on p. 38, 1. 8) may probably be detected by comparing the Berlin original.

Nothing seems to be known about the author of the drama. According to the *prastavana* he had the two names, Srimatraraja and Anangaharsha, and was a son of one Srinarendravardhana. That he was a Kashmirian is likely enough and apparently corroborated by the fact that the one manuscript available is written in the Sarada character.

Kiel,
16th August '28.

F. Otto Schrader, Ph. D.

# भूमिका

---

वाचां सुकविवदने लहरीणां कलशोदधौ च नवनवोन्मेषाः भङ्गयः अपर्यन्ताः समुल्लसन्ति । स्वादुतां शुचितां वा शंसितुं नावसरः औपयिकः आतिशायिकश्च । यतः नान्तरीयके एव ते उभयासां तासाम् । परिमरप्रसर तृषन्तिदन्तुरितोऽपि पवनः जगत्येव सञ्जीवति पवित्रयति च । या तयामान्यन्यानि वस्तूनि कालतः देशतः स्वतश्च । एताःपुनः तदात्व इव आयत्यामपि प्रतिसरकं आसेव्यमानाः आसेचनि कः, तपमपि पल्लवयन्ति, उपलमपि निष्यन्दयन्ति, दहनमपि शीतलयन्ति, किं बहुना--अन्धकारमप्यालोकयन्ति ।

स च कविः स वा कलशोदधिः न नेदीयान, न वा दवीयान् इत्यस्ति कापि श्यामिका, यथाहुः—

"उपेयुषामपि दिव सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं काव्यं कान्तमयं वपुः" ॥ इति

स चायं उभयासां समुद्योतः अपरिम्लानपरिस्पन्दः न हीयते, नास्तमेति च । उदितोदित एव । यत्सदा पश्यन्ति सूरयः । यथाहुः—

"इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयं ।
यदि सारस्वतं ज्योतिरा संसारं न दीप्यति ॥" इति
"वाचं शौरिकथालापगङ्गयैव पुनीमहि" ॥ इति च

आसायं निर्दयमारटन्ति दर्दुराः अविलान्यं बून्यासाद्य, नहि मृगास्सन्तीति शाल्यो नोप्यन्ते । आदौ हालाहलस्य अन्ते सुधाया, प्रथमं धूमस्य

चरममर्चिषः, पूर्वं तमसः पश्चात् ज्योत्नायाः, अग्रे कालुष्यस्य ततः प्रसन्नतायाः, एवमुत्तरस्य अभ्युदयाय पूर्वस्योद्गमः। सेयमेवंप्राया लोकयात्रा। यथामनन्ति—

"सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणाँ तथा वाचां साधुत्वे दुर्जनो जनः" ॥ इति

यथाच—

"स विघ्न विप्रुषः कान्तक्रियारंभाः" इति।

सुरभीणामितरेषां वास्तु कुसुमानां गुंफनं, मालाकारनयः श्रेयान्। न करीषसञ्चयकारस्य। सन्त्येव वहवः सतृणाभ्यवहारिणः। अरोऽचकिनः कतिपये। यदाहुः—

"येनास्मिन् अतिविचित्र कवि परम्परावाहिनि संसारे कालिदास प्रभृतयो द्वित्राः पञ्चषा वा महाकवयः परिगण्यन्ते" इति।

सति चक्षुषि, कटाक्षाणां विलासाः : रूपस्य वा आभिरूप्यसंपत्। हन्त हन्त पाटितमेव लोचनं भारतस्य सुकवि सूक्तीः तिरोदधता, अविदग्धकर्णान् उद्धर्षयता, पापिनो कोपिनः व्यापिनः कुर्वता, अस्मद्दुर्भागधेय नर्मस्पर्शेन अनेन कलिना।

कामं कंटकिनश्शतं विटपिनो द्वित्रा रसाला वने
दावाग्निस्स तु निर्विशेष मदहन् सर्वान् न विश्राम्यति।
आश्वासाय जनस्य दाह समता मा विस्तृणानः खलः
सन्दह्येत विधिस्सहैव यदि तैः खेदः क्षणं मृष्यते ॥

नैतदेवमपरं च।

संस्थाने तु समे किमेष लघिमा यद्द्राघिमा वा जनिः
क्लिन्नाद्दारुदरा द्धुतास्त्व वकरान्नो तत्समीक्षापदम्।

किं ब्रूमः कुशलः कलिः कतिपयैः धीराः त्तणैः पश्यतां
छत्राकोऽप्यलमातपत्रपदवीमत्रासमभ्येष्यति ॥

एवमपि संभाव्य बिभीम:—

दुश्शिक्षाक्षर दुर्विदग्ध हृदय व्यावर्धितेर्ष्यानल
ज्वालो द्गगनपूर्वरङ्ग पिशुनैर्दुर्वर्ण धूमोद्गमैः ।
लोकस्संप्रति लोप्यते सुकविवाक् प्रासावलोकोऽसा
धिर्विष्टयैव समास्तृणाति जगतीं नीरन्ध्रमंधं तमः ॥

अथवा न किञ्चिदेतत् धीराणां । बुद्बुदाः कियच्चिरमुत्कन्धरयेयु रात्मानं—

कीर्णे श्येननखावदारितमुखात् चौद्रद्रवे कोशतः
श्वानं पूतिनि त्रा विशोष रसनं कामं किराताः स्तुयुः ।
तर्षोत्कर्षितमालती मधुपरिष्यन्दो मिलन्दश्चर
न्नेको लोक पुरस्कृत स्सुमनसां नासीर मासीदति ॥

श्यामानां रदनच्छदं सुषमया कर्णो समुत्तंसनात्
साकूतस्मर तल्प कल्पनकला भङ्गीभिरंगान्यपि ।
स्वादिम्ना पिक काकलीस्सु भगयन् चूतस्य यः पल्लवः
काकः क्रेङ्कुरुते विदार्य यदि तं जातं किमेतावता ॥ इति

ननु सन्त्येव महौषधयो गुल्मान्तरिताः अनर्थिसंपाततिरोहिताः अपां सुद्यमन्तरङ्ग मध्यासते । प्रशस्तचक्षुः पश्यति, सुकृती प्राप्नोति । उक्तं हि—

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते"
"मत्तः स्मृतिर्ज्ञानमपोहनं च"

'तेषामेवानुकंपार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।
न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति ॥''
"एति जीवन्तमानन्दो नरं वर्षशतादपि''—इति च

तादिदं नः--सुप्रभातं भगवतो विवस्वतः प्रसादात् यत् अनङ्ग हर्षापर नाम्नो मातृराजस्य अमृतरसनिष्यन्दिनीं तापस वत्सराज चरित चरितार्थां कृति मुपलभामहे—

एषा तपस्विनी कान्दिशीका अविद्ध कर्णोपद्रवा दाहास्विदोदरिकै र्निर्विप्रतीसारं विक्रयात् गोसारमलभमाना जीर्णा शकलिताङ्गी अन्तरितमुखी कथमपि जीवितं धारयन्ती भारतीभिमां भुवं परित्यज्य दवीयोन्तरे जर्मन नाम्नि देशे वर्लिन् नगरे रसिकैः रक्ष्यमाणा अज्ञात वासमवसत् ।

मार्गतोऽपि निखिलेऽपि भारते वलये पोतलिका मप्यलभमानाः चिर रात्रात् चिन्तादन्तुरित स्वान्ताः भारताः केऽपि तत्परायणाः तन्नामन्त्राक्षरा-गयावर्तयन्त आसन् । गच्छत्येवं महीयसि काले स्वानुसन्धान निर्विण्ण हृदयान् तान् अनुकम्पमाना कुतोऽपि हेतोः सैव आत्मान मुपग्राहयन्ती विश्व रूपा दीपिकाया इव दीपिका आत्मप्रतिमया स्मप्रत्यस्मान् आत्मनीनं रसं पाययन्ती पुरोभूत्वा चक्षुषी श्रवसी च पवित्रयति । किमन्यदावेद्यतां नाम, स्वयमेव साक्षादुपसेवमानाः इतः परां कोटिमानन्दस्य प्रयान्तु सहृदयाः रसज्ञाः ।

---

## ग्रन्थस्याधिगमः

इतः प्राक् चत्वारिंशतो वर्षाणां ध्वनिलोचने परिशीलयमाने तापस वत्सराज नाटकस्य अनुवादो दृष्टः । पद्भ्यो व्यङ्क्येभ्यः पद्यान्युदाहृतानि । तत्र प्रति सरकमास्वाद्यमानमेकैकमप्युन्मादयति हृदयं । अस्यान्तर सद्भाव वार्तापि भारते मंडले नाश्रूयत । किमुत समग्रायाः कृतेः । तदिदं नापद् जीर्णं विपश्चितां । क्रमेण ग्रन्थान्तरेषु परिशील्य मानेषु आलंकारिकेषु, क्वचित्

648



कतिपयानां पद्यानां अन्यत्र प्रमेयांशस्य अपरत्र नाम मात्रस्य उपलभः समग्र प्रबंध संपादने महतीमुत्कंठामुदजृंभयत् । वर्तमाने काल परिवर्ते केरलेषू पलब्धस्य कुन्तक कृत वक्रोक्ति जीवितनाम्नः अलंकारनिबंधस्य उन्मेष चतुष्टयात्मकस्य बहुशुद्धि त्रुटि जटिलस्यापि आद्यमुन्मेषद्वयं खिलीभूत सुन्दर ग्रन्थलाभाह्लिष्टहृदयेन वङ्गदेशे ढाका विश्वविद्या स्थानसदस्येन सुशील कुमार डे. महाशयेन संमुद्रितं । तत्रोदाहृतपद्यानां आकरनिर्देशे क्रियमाणे अदसीय नाटक पद्यानामपि अभ्यन्तराङ्क निर्देशादिकं दत्तं । उपोद्घाते च समग्रस्य नाटकस्य जर्मन् जनपदे बार्लिन नगरस्थ पुस्तक भाण्डागारे सत्ताप्य वा सूत्रयत । तदवगमनेन समुच्छ्वसत् हृदयं वस्तु सद्भाव विस्रम्भेण प्रीयमाणं आत्मनि न माति स्म ।

प्रसङ्गसङ्गत्या सहृदयगोष्ठीसमुत्कलिकासमुत्तेजनया प्रतिरूपक ग्रहणाय तज्जनपद वास्तव्येन षेडर नाम्ना पंडितवरेण सार्कं सौजन्यपत्रिका प्रश्नोत्तरदिकमतानि । यस्स सहृदयः अस्मिन् भारते मंडले मदरास नगर प्रान्ते काश्चित् वत्सरान ध्यवसत् । सो सौ महाशयः अस्मदीय संविभागाय प्रीयमाणः बर्लिन नगरस्थ भाण्डागारिक महाभागं प्रत्यभिधानादि विवरणेन निरदिशत् । ततश्च तं प्रति संचारिते लेखे सतु काश्मीर शारदाक्षरविलिखित स्य अशुद्धि त्रुटि सनाथस्य प्रति पिपितिसतग्रन्थस्य प्रतिरूपणकृते लेखक मूल्यं अध्यर्धशतं रूपकाणां पर्यन्वयुङ्क्त । ततस्तदनुसारेण प्रेषिते लेखक शुल्के स तु महीयान् अन्यूनातिरिक्तं दर्पण तलप्रति फलितमिव प्रतिच्छंदं आत्मना संपाद्य अस्मभ्यं प्रेषित वान् । न केवलमेवैतावत् । इतो मुद्रिताकार पत्र प्रेषणे कृते पुनरप्येक कृत्वः मातृकया संवादमपि स्वेन करिष्यमाणं प्रत्यजानात् ।

एव अस्य नाटकरत्नस्य अवलोकनादिना जायमानः विपश्चितां स हृदयानाम् यः आनन्द बहुतमानः तस्य प्रस्तावित चरौ जर्मनदेश निवासिनौ सहृदयौ पंडित वरौ प्रथमभागिनौ भवतः इत्याशंसामहे ।

## मातृका कोशस्य स्थितिः

मातृका तु जीर्णा अशुद्धि त्रुटि बहुला आदौ मध्ये अन्तेच । जात्यन्धेन लिखितेति निर्वचनिका दृष्टिः । ग्रन्थान्तरेण सार्कं एतन्नाटकं च एकस्मिन् पुस्तके प्रतिरूपितं संपुटितमिति अवगम्यते । आदितः त्रिषष्टितमे पत्रे पर्यास लेखनं ग्रन्थान्तसरं । ६४ चतुष्षष्टि तमे पत्रे अस्य नाटकस्यारंभः । तत्त् पत्रे

त्रुटितं लुप्तं च। अस्य परिसमाप्तिश्च ९५ पञ्च नवति तमे पत्रे दृश्यते। अन्तरा च द्वित्राणि पत्राणि लुप्तानि। प्राकृत भाषा वाक्येषु तु महान् विपर्यासः स्तोभाक्षराणां च संपत्तिरस्ति: ग्रन्थपाततोऽपि उपलभ्यमान भागे अक्षराणां व्यत्यासः परं खेदमावहति। वरं काणता न पुन रन्धता; प्रकोपः। यत्सुभाषित मेक मध्यगां पमाहि—

"सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव विवर्जिता स्सुरभयस्स्रग्गन्ध धूपादयः।
कोपं रागिणि मुंच मय्य वनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहे भवन्ति दयिते सर्वा ममान्धा दिशाः"। इति

आदि कवेश्च—

"दीपो नेत्रा तुरस्येव प्रतिकूलासि भामिनि।" इति च

किं बहुना—

रसालफलं शुकचञ्च्वा दलितं दयनीयतामापन्नमपि
अमन्दं नन्दयत्येव वन्दनीयेन निजेन निष्यन्देन।

मृद्वीका मृदितापि मासृणेन मधुरसेन मादयत्यैव मनांसि मानवतां
मन्दस्मितं लवशो विकीर्णमपि कन्दलयत्य मन्दमानन्द भिन्दुवदनायाः।
अवयवशोपि निर्वर्ण्यमानं लावण्यं मङ्गमयति चङ्गिमान मङ्गनायाः।

किं वा स्वादु पयः कवेरदुहितुस्तीरे तदीयेऽथवा
पुंड्रेक्षुस्तदुपस्मृतः किमधरः कर्णाटलोलभ्रुवाम्।
मत्तायाः किमपाङ्ग वक्रवलनं किं वा ध्वग प्रेयसी
गीतिस्संप्रति मातृराज सुकवेराहो नु भङ्गी गिराम्॥

चिररात्रात् प्रहीणलब्धस्य करुणविप्रलंभसर्वस्ववाहिनः अस्य नाटक सुधाकरस्य दिदृक्षासमुल्लसिता पर्युत्सुकता ग्रन्थत्रुटिकलंककणिकातः न मनागपि ग्लानिमायास्यति ।

यदाह महा कविः--

"एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ।" इति

निखिलेऽपि भारते मंडले अन्तर्हिता खिलीभूता देशान्तरतः समाकलय्य कृतिमिमां आन्तरं बाह्यं च चक्षुरुन्मील्य अनुगृह्णती भारत भागधेय भाविता वतारा भगवती सरस्वती स्वयमेव निरवद्य शरीरां करिष्यतीति निर्भराः तामुपास्महे ॥

वन्दे श्रुतिसखीदत्त हस्तालंबां सरस्वतीं ।
विरिञ्चि रसनोपान्त रत्नदोला विहारिणीम् ॥ इति-

——:**:——

## कथाशरीरम्

कलहे शत्रुजयाय मन्त्रिवृषभैर्देव्या मृषा प्लोषणे
जातो वासवदत्तया विरहतो वैराग्यतस्तापसः ।
मध्ये तन्त्रवशादुदूह्य विवशः पद्मावतीं मागधीं
जित्वा रातिमवाप्य च स्वमहिषीं वत्सेश्वरो नन्दति ॥इति

एनां कृतिं व्यधित तापसवत्सराज
पद्मावती प्रणयपाणिपरिग्रहांकाम् ।
राजा कविः करुणवर्मितविप्रलंभ
संभोग संपदमिहैवमनङ्गहर्षः ॥

——:**:——

## नाटककविः

अस्य नाटकस्य रचयिता अनङ्गहर्षापरनामा मातृराज इति मातृकाकोशे अक्षराण्यवलोक्यन्ते ।

यथा अस्य प्रस्तावनायां नटीं प्रति सूत्रधार वाक्यम्—

"आर्ये अर्थकिम्-नुनु तस्यैव सकलनरेन्द्रचन्द्रमसः श्रीनरेन्द्रवर्धन सूनोः अनङ्गहर्षापरनाम्नः श्रीमातृराजस्य कृतौ,, इति ।

अनेन प्रस्तुत ग्रन्थकारस्य अनङ्गहर्ष इति मातृराज इति नामद्वयमिति निश्चीयते । तत्र मातृराज इति पदे एवं विकल्पाः प्रादुर्भवन्ति—
१ किं अवधारणार्थको मात्र शब्दः, २ उत परिमाणार्थकः मात्राशब्दः, ३ आहोस्वित् जनन्यर्थको मातृशब्दः इति । यतः लेखकदोषात् आमूलचूडं ग्रन्थस्य अक्षराणि विकृतानि विपर्यस्तानि च ।

वयमेवं विस्रम्भामहे—जनन्यर्थको मातृशब्द एव सहृदय हृदयावर्जको भवतीति ।

एतावति समये वर्तमाने उपलब्धेषु प्रबन्धेषु ऐतिहासिकानां वा समुल्लेखेषु नास्य ग्रन्थकारस्य नाम वा अभिजनाद्यपदानं वा लेशतो प्यवधार्यते। नाटकस्य तु नाम "तापसवत्सराजं,, इति सुप्रतीतं । ग्रन्थान्तरेषु प्राचाम् बहुलमुपलभ्यन्ते एतस्य पद्यानि वाक्यानि संविधानकं च । एतावतापि इदंतया एवंतया वा विशिष्य इतिवृत्तनिरूपणं ग्रन्थकारस्य सर्वतो निरालंबनमेव ।

नाटकशरीरतश्च अनिर्भिण्णगभीरा वैदुष्यप्राशस्तिः केवलं मनागालक्ष्यते ।

यथा—"स च कविः—

सद्वृत्तानुगतो गतो गुणवतामाराधने तुक्षणं
कर्त्तु वाञ्छति । सर्वदा प्रणयिनां प्राणैरपि प्रीणनम् ।
मात्सर्येण विनाकृतः परकृतीः शृण्वन् वहत्युच्चकै-
रानन्दाश्रु जलप्रवाप्लुतमुखो रोमाञ्चपीनां तनुम् ।।

स च किल कविरेव मुक्तवान्—

मया हि—

न कवित्वाभिमानेन न चाप्यन्येन हेतुना ।
रचितं नाटकमिदं स्वगोष्ठी भावितात्मना ।।

सा च गोष्ठी—

पदवाक्य प्रमाणेषु सर्वभाषाविनिश्चये
अङ्गविद्यासु सर्वासु परं प्रावीण्यमागता ।।

इतोऽतिरिक्तं न मनागपि अपदानविशेषं देशकालयोरन्यतरस्य वा संग्रहीतुं पारयाम: ।

अनुवादक प्रबंधकारकालपरामर्शात् इयन्निरूपणं हृदयङ्गमं न नाम न भवति प्रशस्तदशान् ।

१—-यथा--जैनेन हेमचन्द्रेण योजिते काव्यानुशासननामनि अलंकार निबंधे एतन्नाटकपद्यानि कानिचित् उपात्तानि । अयम् तु कुमारपालितस्य सभायामासीत् । कुमारपालितस्य सद्भावकालं शालिवाहशके द्वादश शतकान्तात् त्रयोदशशतकस्य आरम्भावधिके अन्तराले कल्पयन्ति कालचिन्तका: ।

२—-जल्हणेन संगृहीतायां सूक्तिमुक्तावल्यां नाटकनामग्राहं एतन्नाटक तृतीयांकगतं "आदौमानपरिग्रहेण,, (३--१७) इतिपद्यं गृहीतं । जल्हणस्य समयादि तत्रैव ग्रन्थे व्यक्तं निगदितं ।

यथा—

शाकेंकाद्रीश्वरपरिमिते वत्सरे पिंगलाख्ये
चैत्रे मासे प्रतिपदि तथा वासरे सप्तसप्ते: ।
पृथ्वीं शासत्यतुलमहसा यादवे कृष्णराजे
जल्हस्यार्थे व्यरचि भिषजा भानुना सेयमिष्ठा ।। इति

एतेन शालिवाह शके (११७८) द्वादशशतकान्ते जल्हणस्य सत्ता प्रतीयते ।

३—-इत: प्राक् प्रविशाम:--अमुष्मादपि पूर्वतनेन भोजदेवेन स्वीये सरस्वती कंठाभरणे शृङ्गारप्रकाशे च अस्मान्नाटकात् बहूनि पद्यानि वाक्यानि प्रमेयाश्च समाहितानि दृश्यन्ते । स तु भोजदेव: शालिवाहशके एकादशे शतके आसीदिति शिलालेखादिप्रमाणतो निश्चय: ।

४----अलंकार सर्वस्वकारेण मंखकेन स्वनिबन्धे नाटक गतं पद्यमेक मुद्योजितम्।
५----काव्य प्रकाशकारो मम्मटश्चात्रस्थं पद्यमेकं संजग्राह ।
६----वक्रोक्ति जीवितकार: कुन्तकोऽपि अदसीयानि पद्यादीनि स्वग्रन्थे निदर्शयतिस्म। ते एते त्रयोऽपि शककाले दशमशतकोत्तरार्धत: एकादशशतकाद्य भागावधेरभ्यन्तरे आसन्निति अमीषां त्रयाणां पौर्वापर्यं नाति दवीय: ।
७----बाल रामायणादे: निर्माता राजशेखर: "सद्य: स्नात,, इति नाटक पद्यमेकं काव्यमीमांसायां द्वादशेऽध्याये निरदिक्षत्। अस्य समय: दशमशतकस्य आदि भागे इति बहूनां मतम् ।
८----ततश्चाग्रे दृष्टिं निक्षिपाम: । ध्वनिलोचनकारोऽभिनवगुप्त: स्वकृतौ लोचने भरतनाट्यव्याख्याने च न केवलं पद्यानि वाक्यानि च, प्रत्युत नाटकनामग्राहं संविधानकं च न्यरूपयत् । अयं बृहत्प्रत्यभिज्ञाविमर्शिनी नाम्नि निबंधे आत्मन: समयं पद्यबंधेन प्राचीकशत् ।
यथा—

इति नवतितमेऽस्मिन् वासरेंऽत्ये युगांशे
तिथि शशि जलधिस्थे मार्गशीर्षावसाने ।। इति

एतदनुसारेण ( ४११५ ) तम: कले: काल: फलति। स तु शालिवाहस्य शके ( ९३६ ) षट्त्रिंशदुत्तरा नवशती प्रतिपद्यते । अत: अस्यापि वेला दशम्यामेव शकशताब्द्यामादिभागे प्रतीमते ।

९----अमुतोऽपि अग्रे याम:—ध्वनिकार: आनन्दवर्धन: काव्यालोके एतन्नाटक द्वितीयांकस्थं "उत्कंपिनी,, इति पद्यमुदाहरतिस्म । तस्यास्य समय: नवमशतकोत्तरार्थं इति काव्य माला मुद्रित ध्वन्यालोक देवीशतक प्रस्तावनायां दुर्गाप्रसादशर्मणा प्रपंचितम् ।

एवमेषा कालनिश्रेणिका अनुवादकग्रन्थकारसमयपरिचयाय च प्रस्ताविता । एकप्रघट्टकेन आनन्दवर्धनकालनिरूपणमेकमेवालम् । अमुत: प्राक्तनं प्रस्तुतनाटकानुवादकं न किमपि प्रमाणमुपलभामहे ।

पारिशेष्यात् शालिवाहशके अष्टमशतकात् प्राक्तने काले कदा वा क्व वायं कविरासीदिति सीमानिबंधस्य आपातकथननिबोधकमपि मानं न समीक्षामहे । इत: परं प्रमाणशरणा विमृशन्तु ।—

# नाटके रसः

"शृंगारवीरान्यतरप्राधान्यरससंश्रयं,, इत्यनुशासनानुरोधेन नाटक-प्रस्थाने यथायोगं शृंगारो वीरो वा प्रधानं भवति। तत्र चतुर्वर्गैक कारणं ब्रह्मानुभवसब्रह्मचारी शृंगारः।

अस्य द्वौ मुख्यौ भेदौ संभोगो विप्रलंभ इति। ताविमावेकैकशः चतुर्धा भिद्येते। तत्र संभोगो विप्रलंभमन्तरा न प्रकर्षमारोहतीति विप्रलंभः स्वादिष्टः। येनायं प्रतिसरकं नवं नवं स्वादिमानमुत्तरङ्गयन् विश्रान्तिधाम्नः संभोगादतिरिच्यते। अयं च पूर्वानुराग मान प्रवास करुणात्मना चतुर्मू-र्तिरुत्तरोत्तरं प्रकृष्यते।

(*)१—स्त्रीपुंसयोः परस्परमपूर्वादि दर्शन श्रवण जन्मा रूप गुण वयस्संपदुपकारापेक्षः, तदनपेक्षो वा मनःपक्षपातविशेषः प्रथीयान् प्रथमानुरागो विप्रलंभः।

(*) यथाह भोजदेवः शृंगारप्रकाशे—

चतुष्षष्टिं पश्यन् प्रथममभिलाष प्रकृतिका
नथाष्टौ नित्यादीन् पृथगपि चतुर्विंशति विधान्।
मिथो मिथ्या सम्यक्समधिकसमत्वानि विमृशन्
कविः कुर्यात् स्रोतोनुगुणमनुरागव्यतिकरम्॥

परश्शतविभेदवानिति स एष मानस्त्रिधा
मयैण नयनामनःपरमबान्धवो वर्णितः।
अथाध्वग विलसिनी मुख सरोज सन्यातपः
प्रवास उपवर्ण्यते रतिसमुद्रचन्द्रोदयः॥

समासव्यासाभ्याम् कुसुमधनुषो जीवितमिति
प्रवासो निर्णीतः प्रियजनमनोहेम निकषः।
अथ प्रेमोद्यानप्रणयतरुविस्रंभसुमनो
निवासैकस्थानी सुरभिरभिधीयेत करुणः॥ इति

२—प्रथमानुरागे तदनंतरादिसंभोगे वा दृष्ट श्रुतानुमितापराधजन्मा मिथो मिथुनमानसेषु रोषो मानः विप्रलंभः ।

३—सत्यनुरागे दैवदुर्विपाकादिजन्मा तयोः विदूरदेशवासः प्रवासः विप्रलंभः ।

४—प्ररूढस्नेहयोरेकविनिपाते अन्यस्य दुःखातिरेकः हृदयदारणः करुणः विप्रलंभः ।

तदेवंविधे स्रोतसि आसेचनकः करुणविप्रलंभात्मा शृंगारः जीवित मस्मिन् नाटके कविना निरूपितः ।

अस्य च उदाहरणस्थानान्तराणि महाकवीनां प्रबन्धेषु—

१—कुमारसंभवे-रतिप्रलापः,
२—रघौ इन्दुमत्या वियोगः
३—अग्निवर्ण शृंगारश्च;
४—उत्तर चरिते सीता देव्याः प्रवासः
५—कादम्बर्यां चन्द्रापीड पुंडरीकयोरत्ययः
६—अस्मिन् नाटके वासदत्ताया दाहवृतान्तः । इत्यादीनि ।

निरूपितोदाहरणषट्के आद्यं चतुष्टयं इतिहासकथाशरीरकमत्यन्त करुण एव विश्राम्यति । पंचमं तु कल्पितकथावपुरपि पूर्वचतुष्टयतुल्य योग क्षेमं भवति । एवं सत्यपि कविना प्रतिभानुभावभावितया विदग्ध भणितिभंग्या प्रत्याशावलंविनादूरविप्रकर्षान्तरितसमागमवर्णनेन करुण विप्रलंभपदवीमारोपितम् ।

चरमेऽस्मिन् पुनः कथा शरीरे विलक्षणः संविधानकसन्निवेशः । सचिवैः अराति समुच्छेदाय राजाभ्युदय कृते च तज्जीवितसर्वस्वभूतायाः नायिकायाः व्यालीकदाहपरिकल्पनेन करुणस्समुन्मीलितः । अन्तरा नायिकान्तर लाभेन विच्छेदितः संभोगभूमिकांप्रापितः अथ च प्रधान नायिकायास्संघटनेन निर्वाहितः कथाभागः ।

इत्थं मांत्रनीतिमहिमोपकल्पित कथा सतत्वोपि नायकस्य अन्यासंक्रान्तानुरागतया पूर्वस्यां व्यलीकप्रणयितापत्या धीर ललिततामु पमृद्नाति ।

एवं स्थिते महाकविरयं मातृराजः लोकोत्तरप्रतिभाप्रभावपवित्रितां अनुत्तानगंभीरगुंभनां वाचमाचारयन् अन्तरा प्राप्तां नायिकान्तरसङ्गतिं संभोगशृंगारयोगिनीमपि करुणाङ्गतां नयन् धारावाहिनीं करुण विप्रलंभ संपदमनाविला मुद्योतयति । तदेतत् सहृदया जानन्ति रसिकाः

यदाह ध्वनिकारः

शब्दार्थ शासन ज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स तु काव्यार्थ तत्वज्ञैरेव केवलम्,. ।। इति

—*oo*-

रुचिर करुण विप्रलंभ संपत
समुदित तापस वत्सराजवृत्ताम् ।
इदमनुभवितं शुभं प्रभातम्
नव नव भङ्गिमनङ्ग हर्ष वाचम् ।। इति

-oo-

अस्मिन् नाटके प्रसङ्गसङ्गत्या समुल्लिखितनामानः नदीजनपदादि विशेषाः—

गङ्गा यमुने—महानद्यौ । प्रयागः—गङ्गायमुनासरस्वतीनां तिसृणां नदीनां संभेदस्थानम् । मगधः—देशविशेषः पद्मावतीभ्रातुः दर्शकस्य राज्यम् । राजगृहम्—दर्शकस्य राजधानी । कौशांबी—वत्सराजस्य उदयनस्य राजधानी । लावाणकः—ग्रामः-यत्र वासवदत्तायाः दाहप्रवादः । अङ्गारवती, महासेनौ—वासवदत्तायाः माता पितरौ । गोपालकः, पालकः, वासवदत्तायाः भ्रातरौ । नडागिरिः—महासेनस्य प्रधानहस्ती । दर्शकः—पद्मावत्याः भ्राता । शिला-संघातः—दर्शकस्य मुख्यगजः । आरुणिः—उदयनस्य शत्रुः पांचालदेशाधिपः ।

———oo———

वत्सराजचरितमधिकृत्य प्रवृत्तेषुप्रबन्धेषु नाम्ना वस्तुतश्च अवगम्यमाना: एते—

| | |
|---|---|
| १-प्रतिज्ञा यौगन्धरायणम्<br>२-स्वप्न वासवदत्तम् | एतदुभयं नाटकं महा कविना भासेन कृतम् । |

वासवदत्तानाट्यधारा—महाकवे: सुबंधो: कृति: नाटकविशेष:
तापसवत्सराजं—अनङ्गहर्षमातृराजकृतम् ।

अभिसारितावंचितकम्—विशाखदेवकृतम् ।
रत्नावली, प्रिय दर्शिका च—नाटिकाद्वयमिदं श्रीहर्षदेवकृतम् ।

तानी मानि रूपकभेदे नाटिका नाटक रूपाणि । अत्र विवेक:—

१-प्रतिज्ञा यौगंधरायणम्—वासवदत्तापहरणफलकम् ।
२-स्वप्न वासवदत्तम्—पद्मावतीलाभप्रयोजकम् ।
३-वासवदत्तानाट्यधारा—प्रतिज्ञायौगन्धरायण, स्वप्नवासवदत्तोभय समान योगक्षेमा ।
४-तापसवत्सराज चरितम्—पद्मावतीपाणिग्र हनिरूपकम् ।
५-अभिसारितावंचितकम्—एतत्तु पद्मावतीप्रत्यासक्तिम सूचयदपि कथा शरीरमन्यदेव निरूपयति ।
६-रत्नावली—तन्नाम्न्या: राजपुत्र्या: परिणय फला ।
७-प्रियदर्शिका—तदभिधानाया: राजदुहितु: प्राप्तिमावेदयति ।

सुबन्धु कृता वासवदत्तानाट्यधाराकृति:, विशाखदेव
कृतमभिसारिता वंचितकं च शरीरत: नोपलब्धे ।

निरूपित नामभ्योऽन्य: कश्चित् रूपकविशेष: समस्तीत्यवगम्यते ।
अस्ति पद्यमेकं भोजदेवेन शृंगारप्रकाशे अनूदित, प्रकरणाद्युल्लेखेन उपस्कारितं च ।

यथा—

मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम् ।
सैवावन्ती मया लब्धा कथमत्रैव जन्मनि ।। इति ।।

अस्योपस्कारवाक्यम्—अत्र आवन्त्या: वासवदत्ताया: आलंबन विभावभूताया: सकाशादुत्पन्ने वत्सेश्वरस्य रतौ स्थायिभावे अस्या: पुनर्जीवनादिभिरुद्दीपनविभावैरुद्दीप्यमाने समुत्पन्नेषु हर्ष धृति वितर्क

प्रभृतिषु सुखात्मकेषु व्यभिचरिषु संभोग शृंगारतां प्राप्ते स्थायिनि यदेतद नुभावरूप..................न वत्सेश्वरस्य तत् शृंगाररसादुपजायमानं रस वदुच्यते । इति ।

एतत्पद्यार्थावगमनेन स्वप्नवासवदत्तवत्, तापसवत्सराजवत् पद्मावती प्रत्यासत्या दाहच्छलेन अन्तरितायाः वासवदत्तायाः पुनरधिगमं प्रस्तुवद्रूपकान्तरं निर्विकल्पं समस्तीति सुवचम् । एवं हि नाम संभाव्यते यदेतत् सुबन्धुकृतं वासवदत्तानाट्यधाराख्यं रूपकं तत्रस्थं पद्यमेकं दृश्यते ।

पहयंब किं कटकपिङ्गल वाचकैस्तैः
भक्तोहम यु ? ( स्यु ) दयनः सुललितानीयः ?
यौगन्धरायण ममानय राजपुत्रीं
हा वर्ष रक्षित गतस्त्वमपि प्रभावः ? इति ।

व्यलीकदग्धायाः अवन्तिराजकुमार्याः वासवदत्तायाः पुनरधिगम एव तत्र फलावाप्तिः ।

तदेतत् वासवदत्तादाहाकर्णन प्रवृद्ध शोकस्य उदयनस्य परिदेवितं वक्ति । तेन "मृतेति प्रेत्य,, इति पद्यमपि सुबन्धुनाटकगतमपि नाम कदाचित् भवेत् इत्यत्र सहृदयाः प्रमाणम् ।।

भरत नाट्य व्याख्यायां अनूदितः सुबन्धु नाटक भागः यथा —

द्वात्रिंशाध्याय विवरणे नाट्यायितनिर्वचनावसरे—"तत्रास्य बहुतर व्यापिनः बहुमार्गस्वप्नायिततुल्यस्य नाट्यायितस्योदाहरणं महाकवि सुबंधु निबद्धो वासवदत्तानाट्यधाराख्यः समस्त एव प्रयोगः ।

तत्र हि बिन्दुसारः प्रयोज्य वस्तुक उदयनचरिते सामाजिकोपि । उदयनो वासवदत्ता चरिते ।

एष चार्थः स्वस्मिन् सूत्र ? रूपके दृष्टे सुज्ञानो भवति । अतिवैतत्य-भावात्तु न प्रदर्शितः ।

एकस्तु प्रदेश उदाहियते । तत्र हयुदने सामाजिको कृते सूत्रधार प्रयोगः ।

"तव सुचरितैरेव जयति,, इति ।

उदयनः—कुतो मम सु चरितानि,, इति सास्र विलपति ।

एहयंब किं कटक पिङ्गल वाचकैस्तैः
भक्तो हमप्यु ? ( रम्यु ) दयनः सुललतामीयः ?
यौगन्धरायण ममाजय राजपुत्रों
* हा वर्ष रक्षित गतस्त्वमपि प्रभावः ? ॥

तत्रैव बिन्दु सारः सामाजिको भूतः परमार्थ तामनभि ( मन्य ) मानो धन्या खलु प्रलापै श्च ? सति ?

प्रतीहारी—( आत्मगतं ) अ अ णि द परमात्थ ? क
ल हिवच इ खु दे वो ,,

इत्यादि ( अ ) परिमित व्यापिनो नाट्यायितस्योदाहरणमिति ॥

वामनालंकारसूत्रवृत्तौ तृतीये अधिकरणे द्वितीये अध्याये साभिप्रायत्वं यथा ।

"सोयं सं प्रति चन्द्र गुप्ततनयश्चन्द्रप्रकाशो युवा
जातो भूप तिराश्रयः कृतधियां दिष्टया गतार्थश्रमः,, ॥

आश्रयः कृतधियामित्यस्य सुबन्धुसाचिव्योपक्षेपपरत्वात् साभिप्रायत्वमिति ।

अनेनैतत्पद्यार्धं सुबन्धुकृतवासवदत्तानाट्यधारा प्रस्तावनायां सूत्रधारस्योक्तिः, इति साधीयसी दृष्टिः ।

भोजदेवकृते श्रृंङ्गारप्रकाशे द्वादशे यथा--विशाखदेवकृते अभिसारितावंचितके वत्सराजः संभावित पुत्रवधायै पद्मावत्यै क्रुद्धः तथाचाभ्यधात्।

"प्रदुष्टोग्रग्राहां सरितमवगाढश्श्रमवशा
दुपालीनश्शाखां फल कुसुमलोभाद्विपतरोः ।
फणालीच्छायार्थी च्युतपरिचर्यां क्रौर्यनिरतां
विषज्वालागर्भां चिरमुरगकन्यामनुगतः ॥ इति

* वर्ष रक्षित इति यौगन्धरायणस्य सांस्कारिकं नाम

# अस्मान्नाटकादनूदितानां पद्यवाक्यसंविधानकादीनां अनुवादकग्रंथप्रदेशः

-००-

१ आनन्दवर्धनकृतःकाव्यालोकः
२ अभिनवगुप्तकृतं ध्वनिलोचनम्
३ अनेनैव कृता भरतनाट्यव्याख्या
४ राजशेखरकृता काव्यमीमांसा
५ कुन्तककृतं वक्रोक्तिजीवितम्
६ मम्मटेन कृतः काव्यप्रकाशः
७ मंखककवि कृतमलंकारसर्वस्वम्
८ भोजदेवकृतं सरस्वतीकंठाभरणम्
९ एतेनैव कृतः शृङ्गारप्रकाशः
१० जल्हणेन कृता सूक्तिमुक्तावली
११ हेमचन्द्रेण कृतं काव्यानुशासनम्

एतेषु एकादशसु निबन्धेषु उदाहृतानां पद्यानां नाटकावान्तराङ्कादिनिर्देशस्तु पद्यानुक्रमणिकायाः टिप्पणे निरूपितः। तथापि विशिष्य पद्यवाक्यसंविधानादिकं यत्र यत्र प्रतिपादितं ततस्ततः तत्सर्वं उच्चित्य संप्रति संवादसौकर्येण सहृदयसमावर्जनायात्र लिख्यते।

१ काव्यालोके तृतीयोद्योते-"उत्कंपिनी भयपरिस्खलितांशुकान्ता„ इति पद्यं (२-१६) केवलं गृहीतं। अस्य उपस्कारवाक्यं लोचने यथा—वासवदत्तादाहाकर्णनप्रबुद्धशोकनिर्भरस्य वत्सराजस्य परिदेवितम् इति।

२ ध्वनिलोचने तृतीयोद्योते-तापसवत्सराजे हि वासवदत्ताविषय; जीवितसर्वस्वाभिमानात्मा प्रेमबन्धः तद्विभावाद्यौचित्यात् करुणविप्रलंभादिभूमिकां गृह्णन् समस्तेतिवृत्तव्यापी राज्यप्रत्यापत्त्या हि सचिवनीतिमहिमोपनतया तदङ्गभूतपद्मावतीलाभानुगतया अनुप्राणरूपां परमामभिलषणीयतां प्राप्तवान्। वासवदत्ताधिगतिरेव तत्र फलम्। निर्वहणे हि

प्राप्ता देवी भूतधात्री च भूयः संबन्धोभूद्दर्शकेन (६-६)

इत्येवं देवीलाभप्राधान्यं निर्वाहितम्। इयति च इतिवृत्तवैचित्र्ये चित्रे

चित्रभित्तिस्थानीयो वासवदत्ताप्रेमबन्धः कथावशादाशंक्यमानविच्छेदोऽपि अनुसंहितः। तथा हि—प्रथमे तावदंके स्फुटं स एवोपनिबद्धः "तद्वक्त्रेन्दुविलोकनेन × — ×-प्रेमासमाप्तोत्सवम् ( १-१४ ) इत्यन्तेन। द्वितीयेपि "दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न किं [ २-६ ] इत्यादिना स एव विच्छिन्नविच्छिन्नोप्यनुसंहितः

तृतीये पि—"सर्वत्र ज्वलितेषु वेश्मसु,, इत्यादिना—चतुर्थेपि * "देवी स्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे ( ४-३ )—पंचमेऽपि—समागम प्रत्याशया करुणे निवृत्ते विप्रलंभे अंकुरिते—"तथाभूते तस्मिन् मुनिवसति जातागसि मयि,, ( ५-१ ) इत्यादिना—षष्ठेऽपि—"त्वत्संप्राप्तिविलोभितेन सचिवैः प्राणा मया धारिताः,, ( ६-३ ) इत्यादिना।

३ भरत नाट्यव्याख्यायां षष्ठेऽध्याये अभिनेय भावनिदर्शने—"शोकेन कृत स्तंभः,, ( २-७ ) इति पद्यं उदाहृतम्।

अष्टादशे सन्ध्यध्याये—"बिन्दुर्यत्र तादृशाकः कर्तव्यः। यथा—तापस वत्सराजे तृतीयांकसमाप्तौ—"आदौ मानपरिग्रहेण गुरुणा दूरं समारोपितां,, ( ३-१७ ) इति राज्ञः उक्त्या पद्मावत्याः परिणयाभ्युपगममनुसन्दधत्याः प्राप्तिसंभावनाख्यतृतीयावस्थाप्रदर्शिनि भाविनि चतुर्थेके बिन्दुर्योजितः। तत्रैव एकोनविंशेऽध्याये—षष्ठेंके—"त्वत्संप्राप्तिविलोभितेन सचिवैः प्राणा मया धारिताः,, ( ६-३ ) तत्र प्रधान सिद्धिः। इत्यादि।

तत्रैव त्रयोविंशे वैशिकाध्याये यथा—तापसवत्सराजचरिते—पद्मावतीं प्रति कामोत्पत्तिर्वत्सेश्वरस्य निमित्तम्। अत्यन्तानुत्पत्तिर्नाम—तथा चाह "मयि मनः प्रणिधाय कृता जटाः न गणितस्वजनो न नवं वयः। अनुगमैरिति मामनुरागिणीं व्यवसिता दृपनेतुमिवेच्छति,,। ( ४-८ ) इति।

४ काव्यमीमांसायां द्वादशे अध्याये--"सद्यस्स्नातजपत्तपोधनजटा प्रान्तस्रुताः प्रोन्मुखं········( ३-१६ ) इति पद्यं उदाहृतम्।

५ वक्रोक्तिजीविते—प्रथमोन्मेषे—
"फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकराः,, ( १-१६ ) तत्रैव--
"करतलकलिताक्षमालयोः,, ( ३-२० ) तत्रैव "तद्वक्त्रेन्दुविलोकनेन दिवसः,, ( १-१४ ) द्वितीयोन्मेषे—"सोयं दंभधृतव्रतः प्रियतमे,, (४-१२)

---

* अत्र विचिकित्सितोंशः परिशिष्टे विलोक्यताम्।

"कौशांबीं परिभूय नः कृपणकैः,, ( १-७ ) तृतीयोन्मेषे—करुणरसोदाहरणानि तापसवत्सराजे द्वितीयें के—"धारावेश्म विलोक्य दीनवदनो । ( २-११ ) तथा च अस्यैव वाक्यस्य अवतारकं विदूषकवाक्यमेवंविधं प्रयुक्तमादौ-अ हो पसो खु देवीए पुत्तकिदओ हरिणपोदो अत्तभवन्तं अणुसरदि,, "तथाचायम परः क्षते तारावलेकः,, इति । यथा—"कर्णान्तस्थितपद्मरागशकलं भूयस्समाकर्षता,, ( २-१३ ) चतुर्थोन्मेषे—यथा—तापसवत्सराजे—विलाससर्वस्वं निवासयन् वा·······दाहरणं करुणः प्रत्यंकमभिनवाभिरु क्तिभंगीभिरुक्तिभिरुद्भासते । तेषां·········द्वितीयें के "--राजा--( सकरुणं पुरावलोक्य ) हा देवि पादपैरप्यनुगतासि—कुरवकतरुगाढाश्लेषं । ( २-२३ ) अत्र हि प्रदीप्तान्तः पुरेण कृशानुना कवलितान् विलासशाखिनः पश्यन् अभिनवशोकावेशविवशान्तःकरणः साक्षाद्देवीमनुभवन्········· इति समुत्पन्न निर्विकल्प·········एकैक प्रसादपात्रेभ्योपि अ················ विद्भ्योपि समनुष्ठितसमुचितसाहसेभ्यः सनुचितताद्दशप्रसादभाजनं अभ्यस्ततदास्वादानुभवसर्वस्वमप्यात्मानं तत्समय एव प्रियानुगमनमना चरंतं·············मानो निरूपमव्रीडानिवेशनिर्भरं निर्भर्त्सयति वत्सराजः। "धारावेश्म विलोक्य दीनवदनो,, ( २-११ ) "कर्णान्तस्थितपद्मराग कलिकां,, ( २१३ )

तृतीयेंके--"राजा--( सास्रं निश्वस्य ) "सर्वत्र ज्वलितेषु वेश्मसु,, ( ३–१० ) अत्र शान्तेनापि निर्वाणेनापि । अम्लानमालतीमुकुलकोमल-देहदाहानुमीयमाननैर्घृण्येन दहनेन नाप्येकव्यापारावशीकरणा? वयमद्यापि दह्यामह, इति········· कोमलत्वादेव देव्या तदव दग्धं । वयं पुनर्वज्रसारातिकठोरिमाणः अद्यापि दह्यामहे, न भस्मीभवाम; । इति विशेषणं प्रस्तुतमेवोल्लासयति ।

चतुर्थेंके--राजा--( सकरुणमात्मगतं ) हा देवि "चक्षुर्यस्य तवानना दपगतं ( ४१३ ) इति सखेदमास्ते । अत्र हि क्वचिदिति केलिक्रमापनोदननिमित्तं निकेतनिकेत? पृष्ठसंचरणीयासु लीलासु अयत्न सुलभदर्शने मनोमात्रोन्मीलितसंपा? विबलावण्यलेशशंकमानत्वदाननान्तेवा-सित्वे चन्द्रमसि इत्यादि ।

एवमेको राजा--( सविशेषोत्कंठं निश्वस्य ) "भ्रूभंगं रुचिरे ललाठफलके ( ४-२३ ) अधिगतप्रत्याशासंपादितपद्मावतीपाणि पी डस्य अनंकुरित मनोरथलेशस्यापि तत्कालकंदलितौत्सुक्यपरवशीकृतान्तःकरणवृत्तेः

उन्माद्यत इव प्राप्तामेव प्रद्योतराजपुत्रीं········राज: प्रसादसमयसमुचित प्रकारां ? करुणस्य कारुण्यमवतारयति ।

तत्रैवांके—"किं प्राणा न मया तवानुगमनं कर्तुं समुत्साहिता:,, (५-२५) इति रोदिति । इत्यन्तेन मनागुन्मादमुद्राप्युन्मीलिता तमेव प्रोद्दीपयति ।

"षष्ठेंके—"राजा—हा देवि—त्वत्संप्राप्तिविलोभितेन सचिवैः प्राणा मया धारिता: (६-३) अत्र नैराश्यनिराशीभूतभूरितर (शोकावेग) वेदना दह्यमानमानसप्रतीकारकारणं कालिन्दीनामनिम्नगासंगमनं तस्य प्रियानुगमनमपि वस्तु वाच्यं विस्तरं प्रकरणा भरणीयते ? ।

६ काव्यप्रकाशे सप्तमोल्लासे "उत्कंपिनी भयपरिस्खलितांशुकांता,, (२-१६) इति पद्यमेकमेव अनुल्लितोकरं निरूपितम् ।

७ अलंकारसर्वस्वे असंगत्यलंकारप्रकरणे एतन्नाटकप्रथमांकस्यं "प्राय:पथ्य पराङ्मुखा विषयिण:,, (१-५) इतिपद्यं उद्'हृतं ।

८ सरस्वती कंठाभरणे पंचमे परिच्छेदे—देवीस्वीकृतमानसस्य (४-३) चतुर्थस्य तथाननादपगतं (४—१३) दग्धायामपि वासवदत्तायां वैर प्रतिचिकीर्षया पद्मावती मयोढा । अव सिते च समीहिते तया विना क्षण मपि नजीवामि इति अविज्ञातवासवदत्तासन्निधे: वत्सराजस्य अग्नि प्रवेशाध्यवसाय: प्रियाहृदयत: व्यलीक शल्यमुत्खातेति तापसवत्सराजे ।

९ शृंगार प्रकाशे द्वादशे संवरणं यथा तापसवत्सराजे पद्मावत्या स्विकायां वत्सराज प्रतिकृतौ दर्शितायां ।

वासवदत्ता—(स्वगतमाह) कहं अय्यउत्तो अ इ हद हि अ अ अलि अमहाणु भाषं उत्तअ पेक्खं सं तं सिवतं ? मन्द भाइणि आ आ सेसि ।

(इति ससंवरणमास्ते)

पद्मावती—पिअसहि किं भणासि, लज्जावेसि पिअसहीए एस जड्ढ परिग्गहो ।

वासवदत्ता-कहं दे एसा आकिदी अणुरूवे अहिरमदि ।

सांकृत्यायिनी—(सखेदमात्मगतं) अहो धैर्यं वत्साया; येनेयं-

दयितं विलोकयन्ती ।

तद्गतमनसोपि हस्तगतमस्या; ।

अन्तर्नियमितदुःखा
न मनागपि विकृतिमायाति ॥ ( ३-८ )

तत्रैवान्यत्र—ह्रीर्यथा—तापसवत्सराजे पद्मावत्या प्रत्याख्यानदुःखा दुष्कृत्यात्मानं व्यापादयन्ती वत्सराजेन निवारिता ह्रिया युक्ता । तत्र हि ।

विदूषकः--भोदि अयं दाव थोअगुग्गुलु निबद्धाओ उण्होदपण जडाओ विच्छोलिअ तादिसो एव्व । अहं उण अणवराह मुंडिदो कुदो तादिसे चंडु?''

लहिस्सं ।, इति । ( ४ अंकस्यान्ते )

तत्रैव--लेखो यथा—तापसवत्सराजे प्रद्योतेन वासवदत्तायाः प्रहित... । वत्सेत्वां स्वजनाशिषामविषयं पत्युः प्रसादैर्गता,, ( ६-६ ) इत्यादि ।

तत्रैव च—प्रत्युत्पन्नमतित्वं यथा तापसवत्सराजे—वसन्तकेन राजा भौतिकनैष्ठिकवृत्तयोः विशेषं पृष्टः कथमिति । आह ।

( राजा ) किं भवान् नैष्ठिकं प्रपन्नः ।

विदूषकः—भो णाहं भोदिअं जाणामि णहि णहिअं । जदा तुमं पदावपदं परि ·····असि तदा जा एसा दासीए लिमा अस्सथ विअ ?··················
एदा विअ अख ·····विमे धा दो णेद्दरदि । एदं पपरिव्वाअअमं डिअं सदसक्कारं णइ अ ता अज्जेव्व देवीए वासवदत्ताए सहत्थोवणीदो······ मोदए अण्हंतो ? पढमकालादो वि अब्भोहिअं विलसिस्सं ।

राजा—( ससंभ्रमौत्सुक्यं ) कथमिव । ततो विदूषकः--प्रकाशितदाहाया वासवदत्तायाः रभसाज्जीवनोच्छेदं कृत्वा—हस्तमवधूय—आत्मगतं ।
किं दाणि एद्ध करिस्सं ।,, प्रत्युत्पन्नमतित्वाच्चिन्तयन्नाह ।

"अहवा एवं दाव । ( प्रकाशं ) भो वअस्स किं ण सुमरदि भवं । जं भणिदं तेण भअवदा सिस्सादेसेण ? देवीसरिसाकिदीए कण्णआए पाणिग्गहणं णिव्वत्तिअ देवीसमाअमो दे भविस्सदित्ति ।,इति

तत्रैव त्रयोविंशे विप्रलंभसंभोगप्रकाशनाख्ये संविधानकानुरूपसंविधिप्रकाशनावसरे—"क्वचिद्दृष्टौ यथा—प्रथमानुराग, प्रथमानुरागानन्तर, मान, मानानन्तर, प्रवासप्रवासानन्तर, करुणकरुणान्तराः तापसवत्सराजे । इति

१० सूक्ति मुक्तावल्यां—"आदौ मानपरिग्रहेण गुरुणा दूरं समारोपिता,, ( ३-१७ ) इतीदं पद्यं नाटकनामग्राहं गृहीतम्—इति

११ हेमचन्द्रः काव्यानुशासने—तृतीयाध्याये—एतन्नाटकानुवादतया ध्वनिलोचने यान्यक्षराणि उदाहृतानि तानि तान्येव स्ववाक्यसमाधिना निवेशितवान्। प्रत्युत अंतरान्तरा छिन्नपदावापोद्धापाभ्यां तान्येव वाक्यानि पूर्वापरीभावेन व्याख्यानमूलभावेन च योजयति स्म। तत्र मूलतया निवेशिते भागे-यथा—तापसवत्सराजे षट्स्वंकेषु वासवदत्ताविषयः कथावशादाशंक्यमानविच्छेदोप्यनुसंहितः। इति।

व्याख्यानभागे—तथा हि—प्रथमे तावदंके-"तद्वक्त्रेन्दुविलोकनेन दिवसः,, (१-१४) इत्यारभ्य-षष्ठे च—

"त्वत्संप्राप्तिविलोभितेन,, (६-३) इत्यन्तं एकरूपतया उपदर्शितं। अत्र वासवदत्ताविषयः जीवितसर्वस्वाभिमानात्मा प्रेमबन्धः तद्विभावौ विप्रलम्भकरुणविप्रलंभादिभूमिको गृह्णन् विच्छिन्नविच्छिन्नः समस्तेतिवृत्तव्यापितया तदङ्गभूतपद्मावती लाभानुगतया अनुप्राण्यमानरूपा वासवदत्ताधिगतिरेव तत्रफलं। निर्वहणे हि—

> "दृष्टा यूयं निर्जिता विद्विषश्च
> प्राप्ता देवी भूतधात्री च भूयः।
> संबन्धो भद्दर्शकेनापि सार्धं
> किं तद्दुःखं यन्न ? शान्तमद्य॥

इतिदेवी लाभप्राधान्यं निर्वाहितं। इति।

———*:०:*———

अयमुदयनः चन्द्रवंशसंभवः पांडवादर्जुनात्सप्तमः। यथा—अर्जुनः—अभिमन्युः—परिक्षित्—जनमेजयः—शतानीकः—सहस्रानीकः—उदयनः—इति

अस्यपुत्रः नरवाहनदत्तः विद्याधरचक्रवर्ती आसीत्। उदयनस्य अपदानांशः विष्णुपुराणादिषु उपलभ्यते॥

बृहत्कथायां तत्प्रतिरूपके कथासरित्सागरे च सप्रपंचं अपदानं प्रतिपादितम्। मेघसन्देशादिश्रव्यकाव्येषुच्च मनागालक्ष्यते।

# परिशिष्टम्

तापसवत्सराजनाटकपद्यादीनां अनुवादकग्रन्थाः तेषु अनूदितानि पद्यादीनि च भूमिकानुबन्धे प्रकाश्यन्त । ग्रन्थान्तरानूदितवाक्यानां हेमाकरे दृश्यमानानां च क्वचित् महान् विपर्यासो दृश्यते । अनुवादप्रकारस्य च । यथा—

ध्वनि लोचने अस्य नाटकस्य पञ्चभ्योऽयंकेभ्यः
तत्तदंकनामनिर्देशेन एकैकं पद्यं निर्दशितम् ।

तत्र परिपाट्या—'चतुर्थेऽपि,, इति अंकाभिज्ञां आसूच्य "देवीस्वीकृत मानसस्य नियतम्,, इति पद्यं प्रकाशितं ।

अथ ',पंचमेऽपि, इति प्रस्तुत्य "तथा भूते तस्मिन् मुनिवचसि,, इति पद्यमाकारितं ।

यत्तु चतुर्थांक गतत्वेन उपात्तं "देवीस्वीकृत,,इतिपद्यं तत्तु आकारे पंचमांके दृश्यते । पूर्वापरप्रकरणं च तदनुरूप मेव । न चतुर्थांके संबध गन्धोऽपि शक्यशंकः ।

एवं सति पंचमांके द्विवारं पद्यं गृहीतं भवति । प्रत्यंकं पद्योदाहरण धारायां चतुर्थांकादेकमपि पद्यं नोद्धृतं भवति । लेखकप्रमादात् चतुर्थांक पद्यग्रहणशंकापि न समीचीना । तथा सति पंचमांके द्विरुक्तः पद्यालापः दुष्परिहरः । हेमचन्द्रेणापि लोचनानुसारानुवादक्रम एव संग्रथितः ।

अन्य एको व्यतिकरः दुस्समाधः अवलोक्यते । अस्मिन् नाटके प्रथमेंके शुद्धान्तगतस्य राज्ञः मुखात् संध्यां वर्णयति कविः । यथा ।

"राजा—( सहर्षं )—अये अवसितमहः । ( समन्तादवलोक्य ) रामणीयकमन्तः पुरे प्रदोषारंभस्य तथाहि—

आरब्धा मणिदीपयष्टिषु समं पातः पतंगैरितो
गंधान्धैरभितो मधुव्रतकुलैरुत्पक्ष्मभिस्स्थीयते ।
वेल्लद्बाहुलताविलोलवलयस्वानैरितस्सूचित
व्यापाराः प्रति योजयन्ति विविधान्वाराङ्गना वर्णकान् ॥ इति ।

अत्र रामणीयकनिरूपणे—प्रथमेन पादेन चक्षुषः, द्वितीयेन घ्राणस्य, तृतीय तुरीयाभ्यां श्रोत्रस्य च विषयाणां रूप,गन्ध शब्दानां सौभाग्यं प्रत्यक्षानुमानशब्द रूपैः प्रमाणैरुन्मीलितं । उपमानं तु आद्य पादार्थ एव अन्तर्भावितं "वाराङ्गनाः वर्णकान् प्रतियोजयन्ति,, इत्यनेन स्रजां निर्गुंभनं गन्धानां युक्तिः,, इत्यादिः प्रस्तुतशुद्धान्तोचितविलाससामग्री

संपत्ति ख्यातते। इदमेव उत्तरश्लोकेन—"स्यस्यन्ती घनसारसारशकलान्यायोजयन्त्यस्स्रजः,, इत्यनेन विलाससामग्रीसामाज्यं विस्तार्यते। इत्यलम्।

भोजदेवकृते शृंगारप्रकाशे त्रयस्त्रिंशे "प्रारब्धो मणि,, इति पद्यं विभिन्न पूर्वार्धयुक्तं उदाहृतं। यथा—

"सन्ध्याकान्तिकषायितेन नभसा प्रत्यग्रसन्दंशनैः
लीलावेश्मसु दीपरश्मिजटिलं नीलं तमो जृंभते।
वेल्लद्बाहुलताविलोलवलयस्वानैरितरसूचित
व्यापाराः प्रतियोजयन्ति विविधान्वारांगना वर्णकान्॥ इति।

यद्यपीदं "सन्ध्या,, इत्यादि पूर्वार्धं सन्ध्याकालवर्णनमनुवदत्येव। तथापि केवलवार्तारूपतया नीरसं उत्तरार्धस्य न मनागप्युपस्कारकं भवति। प्रत्युत कंटकारिकाकुसुमसन्दानितमालतीस्रग्नोभारवत् पद्यं तद्दूषतां नयति। तदिदं कुशाग्रधियो रसिकाः जानन्ति।

एतेनेदं न खलु नाम न भासते चेतसि विविक्त दृष्टेः—

यथा—समानवर्णनप्रसङ्गयोः विभिन्नयोः पद्ययोरर्धमर्धं एकपद्यतया लेखकवैधेयविधिविलसितमिति। एवंविधमेव कालिदासस्य पद्यमपि विभिन्नोत्तरार्धसंकलितं दृश्यते। अस्ति रघुवंशे इन्दुमतीस्वयंवरार्थागतराज वर्णनावसरे पद्यमेकं। यथा—

असौ महाकालनिकेतनस्य
वसन्नदूरे किल चन्द्रमौलेः।
तमिस्रपक्षेऽपि सह प्रियाभिः
ज्योत्स्नावतो निर्विशति प्रदोषान्॥ इति

तत्रैव शृंगारप्रकाशे अन्यथा इदमेवोदाहृतं यथा

असौ महाकालनिकेतनस्य
वसन्नदूरे किल चन्द्रमौलेः।
दिवापि जालान्तरचन्द्रिकाणां
नारीनखस्पर्शसुखानि भुङ्क्ते॥ इति॥

उपलभ्यमानेषु रघुवंशस्य मूलकोशेषु व्याख्यानकोशेषु वा सहस्रतोऽपि वर्षाणां विद्वद्भिः अनुवानक्रमेणाद्रियमाणेषु न तथा उत्तरार्धपाठगन्धोऽपि प्रसरति। अत्र कापि संभावना उदीयात्। यथा—
कालिदासेन; अनङ्गहर्षेण च ग्रन्थान्तरं निर्मितं भवेत्। दृश्यते हि एककवि कर्तृकेषु ग्रन्थेषु स्वस्य तदा वा किंचित्परिवृत्य वा पद्यादीनां संवादः

यथा—कालिदासस्य रघुवंश, कुमारसंभव, विक्रमोर्वश्यादिषु । यथा वा भवभूतेः उत्तरचरित मालतीमाधव महावीरचरितादिषु इति । एवं अभ्युल्लेखस्य प्रस्तुत निदर्शितपाठ एकः एव साधनं साध्यं च भवति । नान्यात् किमपि । अमुतः अदृष्टाश्रुतासिद्धप्रमाणान्तरपक्ष कल्पनतः वरं लेखकदोषनिश्चय एव । अमुं पक्षमेव प्रसक्तश्रृंगारप्रकाशमातृकाकोश स्थितिरुक्तं भयति ।

उपलब्धचरश्रृंगारप्रकाशमातृकाकोशे ग्रन्थपातः विपर्यासः अशुद्धिः स्तोभाक्षरबहुलता कतिपयाक्षरदुर्विदग्ध लिपि रित्यादि शतं दोषाणां अध्यक्ष्यते । विभिन्नार्थघटितपद्योदाहरणमन्यदपि बहु अस्ति । तत्र दिङ्मात्रं उदाह्रियते । तत्रैव २३ त्रयोविंशे प्रकाशे सामान्यालक्षणोदाहरणे—

* यथा—मण्णु भरिआ ण रुअइ

सन्दि स इ ण णे ह ण भरि सि अंति?

उ अ रि भरेण अ अ एणु अ

मु अ इ व इल्लो वि अं गा इ ।। इति ।।

अमू अर्थे नैकस्या गाथायाः पूर्वापरे भवतः । आकरेष्वन्यथा दर्शनात् । यथा—

‡ "ऊइसि पिआए समअं

तह वि खु मं भणसि कीस किसएत्ति ।

उआरि भरेण अ अण्णुअ

मुअइ वइल्लो वि अङ्गाइ ।। इति

( गाथासप्तशत्यां ३-२५ )

अस्मिन् प्रकाशे लिलक्षयिषितानां विषयाणां त्रिचतुराण्युदाहरणानि दृश्यन्ते । तेषु सजातीयसन्निवेशपेशलेषु पद्यादिषु दुर्विदग्धलेखकप्रमादः सुलभशंकः । अर्वाचीनसंकलिते सुभाषितरत्नभांडागारनाम्नि पद्यसंग्रहे राजशेखरकवेः वसंतवर्णनपरं पद्यद्वयं अन्योन्योल्लुंठनेन विपर्यस्य एकपद्यभावेन वैशसमापादितम् ।

---

* छाया—मन्युभरिता न रोदिति सन्दिशति न स्ने ह······
उपरि भरेण च अश्रु मुंचति बलीवर्दोऽप्यंगानि ।।

‡ उह्यसे प्रियया समं तथापि मां भणसि कस्मात्कृशेति । उपरि भरेण अश्रु मुंचति बलीवर्दोऽप्यङ्गानि ।।

विविक्तं तत्पद्यद्वयं यथा।—

साम्यं संप्रति सेवते विचकिलं षाण्मासिकै मौक्तिकैः
कान्तिं कर्षति काचनारकुसुमं मांजिष्ठधौतात्पटात् ।
तूर्णीनां कुरुते मधूककुसुमं लावण्यलुंठाकता
लाटीनाभिनिभं चकास्ति च एतद्बृताऽतः वेसरम् ॥ १

सूते संप्रति दुग्धमुग्धमधुरं पुष्पोद्गमं मल्लिका
वाह्लीकी दशनच्छदारुणदलैः पुष्पैरशोको चितः ।
भृङ्गीलंघितकोटि किंशुकमिदं किंचिद्विवृन्तायते
मांजिष्ठैर्मुकुलैश्च पाटलितरोरन्थैव काचिल्लिपिः ॥ २ ।

इत्यादि सुधीभिरूह्यम् ।

———*:००:*———

कनकसरिदुदीर्णान् शीकरानाददानः
दिशि दिशि सुमनस्सु स्वागमायत्तदन्तु ।
चरति स पुनरेको मातृराजस्य सूक्ति—
स्फुटित वकुल वीथीकेलिकारस्समीर ॥ १ ॥

मध्ये भारतमंडले विजयते कर्णाटनीवृद्यतः
कावेरी यदुभूधरश्च तनुतश्शर्मदंगयोर्लोकयोः ।
तत्र श्री यदुशैलमूर्ध्नि निवसन् संपत्कुमारो मुनिः
वाचामेव मनाविलं सुमनसा मामोदमासेवते ॥ २ ॥

-००-

# स्खलितनिवेदनम्

व्युत्पन्नवर्णपदसंस्तवधाव्यमान
चेतोनुगामिनयनानवधानवत्या ।
वैधेययोजकविसंस्थुलरेखमुद्रा
संदिग्धवर्णकतया स्खलितानि भूयः ॥

या मातृका त्रुटिमशुद्धिमपक्रमं च
प्राप्तानभिज्ञ दुरुदीर्णलिपि प्रबन्धा ।
सैका स्थितान्यविषये च चिरात्प्रहीण
लब्धा महाकविकृतिप्रतिबिंबथात्रो ॥

दोषैकतानरभसा ननु यास्ति दृष्टि
स्सैव प्रसादयितु मप्यलमाविलानि ।
सत्सु स्वतस्सहृदयेषु दयापरेषु
स्वार्थप्रवृत्तिरपहस्यत एव याञ्चा ॥

तावच्चिरं भवति यावदुपैति थोरा
न्निर्णेजनाय मलभागपि वस्तु शस्तं ।
नीहारपातलिनं मुकुरं प्रमृज्य
हस्ते धरन्त्यभिमुखं च विलोकयन्ति ॥

—o:*:*o—

व्याकीर्णवर्ण विभवे विभवे स्थितेब्दे सिंहे रवौ नभसि मासि हरेर्जयन्त्याः ।
प्राप्ते कलौ गगनवह्निभशरांके कौमोर्कामितशकेऽर्जान भमिवेयम ॥

— —८८— —

# पाठ शुद्धिः

| पृष्टं. | पङ्क्तिः | | पृष्टं. | पङ्क्तिः | |
|---|---|---|---|---|---|
| १-१७-२७-३७-४६-६६-पत्रेषु पुष्टेषु प्रथम पंक्तौ—चरितम् इति शुद्धिः | | | | | |
| १७. | ६ | समा—र्पितमिति स्यात्: | ४६ | १८ | सप्रत्याश |
| ,, | १४ | श्यामपृथो | ,, | १६ | स्यस्यापि |
| ,, | ,, | श्चक्रतामिति स्यात् ? | ५७ | ८ | सविशेषोत्कंठं |
| २१ | १२ | सौ तत्र | | | निश्वस्य |
| २४ | २१ | गच्छावः | ६६ | २ | चेटा |
| २६ | २२ | स्तिता | | | |
| ३० | ८ | आत्मगतम् | ,, | ३ | मह द्:ख |
| ,, | १० | उवसप्पिस्सं | ,, | ४ | उत्ताम्यन्त्याः |
| ३१—२३ | | सविशेषसंभ्रमं | ,, | ८ | निर्वेद |
| ३२ | ३ | वृत्तान्तेन | ६९ | १८ | मन्त्रितं |
| ३५ | १२ | श्यामा ( न्ता ) न्युट | ७० | ६ | संगमं |
| ३८—८ | | स्मृत्वा-इति साधुः पाठः | | | |
| ३९ | १ | निश्वस्य | ७१ | १२ | स्नानान्तरेण |
| ४० | १० | निष्काम | ,, | २२ | मर्तुमु |
| ,, | १९ | गृहीतव्रता | ७४ | १७ | इत्यस्मानन |
| ४१ | २१ | स्थितो मध्याह्नः | ७५ | १० | सुखिनो |
| ४४ | ६ | दुःख विधुरं | भूमिका पुष्टे: १८-१४ ग्रहेण गुरुणा | | |
| ४५ | २ | जिगीषौ | | | |
| ,, | १८ | सविस्मयं | | | |

-००-

# तापसवत्सराजनाटकगतपद्यानुक्रमणिका



१ इदं पद्यं शृङ्गारप्रकाशे ३२ शे अनूदितं ; तत्र एवं पाठः—१ पादे "यस्याः पाणिपारिग्रहे सति पुनर्देवी किल प्राप्यते । ३ पादे—"तल्लक्ष्ये किमपत्रपः" इति ।

२ जल्हणकृतसूक्तिमुक्तावल्यां, अभिनवगुप्तकृतभरतनाट्यव्याख्यायां ( १८ ) अध्याये उदाहृतम् ।

३ शृङ्गारप्रकाशे एकर्गिशे धृतमिदं । ४ पादे "तस्यैषा कृतणेन तेन विधिना" इति पाठः ।

४ आनन्दवर्धनध्वन्यालोके तृतीये उद्योते उपात्तं । ४ पादे "धूमान्धितेन" इतिपाठः । लोचने च एवमेव पाठः । काव्यप्रकाशे सप्तमोल्लासे च धृतं ।

५ इदं कुन्तककृतवक्रोक्तिजीविते तृतीयोन्मेषे प्रकाशितं । २ पादे "समुदितसाध्वससन्नहस्तयोः" इति पाठः ।

१ इदं वक्रोक्तिजीविते तृतीयोन्मेषे प्रकाशितं। ४ पादे "निश्चक्रे न शुकस्य" इत्यक्षराणि सन्ति।

२ वक्रोक्तिजीविते ३ उन्मेषे धृतं। ३ पादे "यत्तत्प्रस्तुतमन्यदेव" ४ पादे "त्वत्प्राप्त्यै कृत" इति।

३ इदं शृङ्गारप्रकाशे ३५ तमे अनूदितम्।

४ वक्रोक्तिजीविते चतुर्थोन्मेषे प्रकाशितं। १ पादे "मुखासवलालना"। शृङ्गार प्रकाशे द्वात्रिंशे च उदाहृतं।

५ वक्रोक्तिजीविते द्वितीयोन्मेषे। २ पादे 'ज्ञानास्यस्य तथा" इति।

६ शृङ्गारप्रकाशे ३६ तमे-सरस्वतीकंठाभरणे पञ्चमे, वक्रोक्तिजीविते चतुर्थे च उदाहृतं।

७ इदं ध्वनिलोचने तृतीयोद्योते अनूदितम्। पाठभेदः टिप्पण्यां दर्शितः।

८ वक्रोक्तिजीविते प्रथमोन्मेषे गृहीतं। ध्वनिलोचने च तृतीयोद्योते। तत्र ४ पादे "प्रेमासमाप्तोत्सवं" इति।

१ ध्वनिलोचने तृतीये उपात्तं। तत्र पाठः—१ पादे "त्वत्संप्राप्तिविलोभितेन मनसा प्राणाः" इति। वक्रोक्तिजीविते चतुर्थे तु एवं पाठः—२ पादे—"तन्मत्वा-त्यजतश्शरीरकमिदं मे नास्ति" इति। उत्तरार्धे तु—"आसन्नेऽवसरः तदानुगमने जाताधृतिः किं त्वयं खेदोयं क तदा गतं न हृदयं तद्वत् क्षणे दारुणे" इति। भारतनाट्यव्याख्यायामभिनवगुप्तकृतयां १९ सन्ध्यध्याये—"षष्ठेऽङ्के—१ पादः त्वत्संप्राप्तिविलोभितेन सचिवैः" ३ पादः—आसन्नोऽवसरस्तवानुगमने जाता रतिः किं त्वयं खेदो यच्छतधा" इति।

२ शृंगारप्रकाशे द्वादशे उदाहृतं।

३ ध्वनिलोचने तृतीये निरूपितं। यथा—"प्राप्ता देवी भूतधात्री च भूयः सम्बन्धोभूद्दर्शकेन" इति। अत्रत्यरीत्या "प्राप्ता देवी" इत्येवमेव पद्यस्य मुखं स्यात् इति सम्भाव्यते। ४ इदं लोचने तृतीये उदाहृतं।

५ पद्यमिदं लोचने तृतीये धृतं। १ पादे "देवीस्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे" इति पाठः। सरस्वतीकण्ठाभरणे पञ्चमे च लोचनवदेव पाठः।

६ वक्रोक्तिजीविते तृतीयोन्मेषे धृतं। शृङ्गारप्रकाशे द्वात्रिंशे च। अत्र पाठः—"केसरलतावीधीषु कृत्वा दृशः" इति।

१ शृङ्गारप्रकाशे पञ्चत्रिंशे निरूपितं। ३ पादे—"प्रियजन मृषाक्रान्तमथवा" इत्यस्ति पाठः। २ इदं वक्रोक्तिजीविते आद्ये उन्मेषे धृतं। ३ वक्रोक्तिजीविते धृतं। ४ भरतनाट्यव्याख्याने त्रयोविंशे—२ पादे "न नवं वयः" इति। (५) इदं शृङ्गारप्रकाशे द्वात्रिंशे उदाहृतं। (६) शृंगारप्रकाशे द्वादशे धृतं।

# स्खलित शोधनं, उल्लोखितश्च

| पुटं | पङ्क्ति | स्खलितप्रदेशाः | शोधनोल्लेखाः | पुटं | पङ्क्ति | स्खलितप्रदेशाः | शोधनोल्लेखाः |
|---|---|---|---|---|---|---|---|
| १ | १ | पाण्डुचन्द्न | आयाण्डु, इत्येवसात् | १८ | १३ | न्यस्तैः ? | व्यस्तैः ? |
| ,, | ६ | कुतौ | कृतौ | १६ | १३ | तोस्य भाग्यै | तोस्यभाग्यै |
| २ | १२ | ष्कान्तो | इति निष्कान्तौ | ,, | १४ | अन्तबद्ध | अन्तर्वद्ध |
| ३ | १० | नन्तररं | नन्तरं | "टि | ७ | बाष्पस्म्भश्च | बाष्पस्तम्भश्च |
| ,, | १५ | गृहीत्वालघु | गृहीत्वा लघु | २१ | १३ | सगस्ससदु | समस्ससदु |
| ४टि | १ | वनजी विन | वनजीविन | २२टि | ३ | अद्यव | अद्यैव |
| टि | ३ | प्रेक्षमाणकं | प्रेक्षणकं | २३ | १४ | परवतश्श | परवशश्श |
| ५टि | २ | प्रेयितुं | प्रेषयितुं | ,, | ,, | शोभनंभण | शोभनं भण |
| "टि | " | पि प्रस्तु | पि प्रस्तुत | ,, | १६ | निष्कान्तः | निष्कान्तः |
| "टि | ५ | एवंते | एवं ते | २४ | ६ | रोदोमि | रोदिमि |
| ६ | १४ | धिवसर्वथा | धिक्सर्वथा | ,, | २१ | धोरोभवः | धीरो भव |
| " | १ | स्वागपं | स्वागतं | २५ | ३ | स्वागतं | स्वगतं |
| "टि | १ | देहि अस्य | देहि आर्यस्य | २५ | २३ | सवैं | सर्वें |
| ८ | ४ | प्रतिहारी | प्रतीहारी | २८ | ६ | वलोवय च | वलोक्य च |
| "टि | ६ | आर्यणाञ्च | आर्याणां च | ,,टि | ३ | अथकंम् | अथकिम् |
| ११ | १४ | प्रेमा समा | प्रेमाऽसमा | २६ | १३ | निष्कान्तौः | निष्कान्तौ |
| १२ | ४ | देवी | देवि | ३० | १७ | जठानिर्दिश्य | जटा निर्दिश्य |
| " | ५ | नयये | नयने | ३०टि | ३ | प्रेक्ष्यमाणा | प्रेक्षमाणायाः |
| १४ | १६ | खोज्व ज्जु | खोज्वज्जु | ३१ | १४ | किं मन | किं मम |
| ,, | २३ | व | वं | ,,टि | ४ | आर्यापुत्रः | आर्यपुत्रः |
| "टि | १२-१३ | लुंपितु | लोप्तु | ३२ | ६ | स्वागतं | स्वगतं |
| १६ | २२ | धा वाराङ्गना | धान्वाराङ्गना | ,, | २० | पद्मा | पद्मावती |
| १८ | ४ | ककुभः!काल | ककुभः काल | ,, | २१ | एव्वं का | एव्व एसा का |
| ,, | ५ | शिखरनिभो | शिखरिनिभो ? | ३३ | ६ | व हति | वहति |

| पुटं | पङ्क्तिः | स्खलितप्रदेशाः | शोधितानि | पुटं | पङ्क्तिः | स्खलितप्रदेशाः | शोधितानि |
|---|---|---|---|---|---|---|---|
| ३४टि | ४ | सन्तव्यमानां | सन्तप्यमानां | ,, | २५ | देवींलं | देवीलंब |
| ,, | १२ | जग्धं मृग | जग्धं मृगै | ४६ | १६ | स्तन्नमा | स्तन्नामा |
| ,,टि | १ | संस्कृतेनवास्ति | संस्कृतेनैवास्ति | ५० | २७ | वासववत्ता | वासवदत्ता |
| ३७ | ५ | वासो वक्कल | वासो वल्कल | ५२ | १८ | वासदत्ता | वासवदत्ता |
| ,, | १७ | तावद्दढमस्मि | तावद्दृढमस्मि | ५४टि | ३ | किमितेन | किमेतेन |
| ४० | २४ | सवमनुराग | सर्वमनुराग | ५५ | ६ | थोक्गुग्गुलु | थोअगुग्गुलु |
| ४२ | ५ | मुनिनां | मुनीनाम् | ५६ | ४ | ब्बह्ममो | बह्ममो |
| ” | ७ | शिशखिन | शिशखिन | ५७ | ७ | पुरः ॥ २२ | पुरः ॥ १ |
| ४३टि | ३ | तालवालवाः | तालवालकाः | ,, | १२ | न्मां प्रिया॥२३ | न्मां प्रिया॥२ |
| ४४ | १४ | सेन | महासेन | ५८ | १२ | ना सादिता॥२४ | नासादिता॥ ३ |
| ४५ | १६ | मुहुदेवी | मुहुर्देवी | ५६ | ५ | प्रिये ॥२५ | प्रिये ॥ ४ |
| ४६ | ४ | दुःखः भरा | दुःखभरा | ,, | १७ | ...व्यतिकरा॥२६ | ...व्यतिकरा॥५ |
| ,, | २१ | भवन्तु प्रिय | भवतु प्रिय | ,, | २१ | प्रामोति | प्राप्नोति |
| ,,टि | १ | सयत्नीभूतां | सपत्नीभूतां | ६० | २ | पुनः ॥ २७ | पुनः ॥ ६ |
| ,,टि | २ | विदुषक वाक्यं | विदूषकवाक्यं | ,, | ८ | न्मूलयितुं | न्मूलयतुं व्यथ |
| ,,टि | ४ | वियर्यासः | विपर्यासः | ,, | १६ | कुञ्जरुः | कुञ्जरकः |
| ४८ | १ | अणवत्तणं | अणुवत्तणं | ६२ | १५ | भुजः ॥२७ | भुजः ॥ ७ |
| ,, | ६ | अतएव | अत एव | ६४ | ६ | लोअणप्यभा | लोअणप्पभा |
| ,, | ६ | तद्पत्रपं | तदपत्रपं | ,, | १० | कुसप्यहार | कुसप्पहार |
| ४८ | ६ | नैंतत्सा | नैतत्सा | ६६ | ५ | विषिक्षु | विविक्षु |
| ,, | १३ | तविं | तत्किं | ” | १० | सचिव | सचिवे |
| ,, | १६ | मया पि | मयापि | ७० | १४ | काञ्चमाला | काञ्चनमाला |

---*---

## प्राकृतगाथाः





१ इदं शृंगारप्रकाशे द्वात्रिंशे उदाहृतं। पाठभेदः टिप्पण्यां दर्शितः।

२ वक्रोक्तिजीविते प्रथमोन्मेषे धृतं। पाठभेदः यथा—२ पादे "नेत्रे निर्भर-मुक्तबाष्प कलशे" इति—३ पादे बद्धोद्वेदविसंष्ठुलालक" इति च।

३ वक्रोक्तिजीविते चतुर्थे धृतं। तत्र २ पादे "देव्या पतन्त्या तदा" इति। ३ पादे "दग्धं वराक्या तया" इति च। ध्वनिलोचने तृतीयोद्योते पाठः यथा २ पादे "श्वासोत्कंपविहस्तया प्रतिपदं देव्या पतन्त्या तया" ३ पादे "दग्धं वारांग्या तथा" इति। शृङ्गारप्रकाशे द्वात्रिंशे धृतं, वक्रोक्तिजीवितवदेव पाठः।

# अस्मिन् नाटके पात्राणि

सूत्रधारः नटी

## प्रथमांके ।

कञ्चुकी
चेटी
शिष्यः
काञ्चनमाला
वासवदत्ता
यौगन्धरायणः
प्रतीहारी
पुरुषः ( लेखहारकः )
राजा
विदूषकः
चेटी
शबरौ

## द्वितीयेङ्के ।

विनीतभद्रः ( रुमण्वद्भ्राता )
रुमण्वान्
राजा
विदूषकः
कञ्चुकी
लेखवाहकः

## तृतीयेङ्के ।

लामकायनः
शिष्यः
माणवकः
चेटी
वासवदत्ता
पद्मावती
सांकृत्यायनी
कोसलिका
विदूषकः
राजा

## चतुर्थेङ्के ।

अमात्यप्रणिधिः
सांकृत्यायनी
राजा
विदूषकः
वासवदत्ता
पद्मावती
कञ्चुकी

## पञ्चमाङ्के ।

चेट्यौ
वासवदत्ता
विदूषकः
राजा
चेटी
पद्मावती
प्रतीहारी
कुञ्जरकः

## षष्ठेङ्के ।

चेटी
यौगन्धरायणः
वासवदत्ता
तापसी
विनीतकः
राजा
विदूषकः
पद्मावती
काञ्चनमाला
माणवकः
रुमण्वान्

J. Kuppuswami Sastri

श्रीः

# तापसवत्सराजचरितम्

## अनङ्गहर्षमात्रराजरचितम्

(१) ... ... ... ...
... ... ... ...

पाण्डु व ? (च) न्दनरसेन मुखं किमर्थं
मत्प्रार्थितार्थविमुखी सुमुखि स्थितासि ।

नटी—णहु किं च आणवेदु अय्यो (२)

सूत्रधारः—आर्ये शरद्गुणाविष्कारिणा नेपथ्येन वत्सराजस्य मे वासवदत्ताभूमिकां सम्पादयिष्यतीति प्रस्तुतम् । (स्मृत्वा) यावदसम्पादयन्त्यैव सर्वं सम्पादितं भवत्या ।

नटी—(विचिन्त्य) अय्य किं तावसवच्छराअं पेक्खंति सामाइआ । (३)

सूत्र—आर्ये अथ किम् । ननु तस्यैव सकलनरेन्द्रचन्द्रमसः श्रीनरेन्द्रवर्धनसूनोरनङ्गहर्षापरनाम्नः श्रीमात्रराजस्य कृतौ कृतानुरागो जनः सम्प्रति ।

स च कविः—

सद्वृत्तानुगतो गतो गुणवतामाराधनेऽनुत्तणां
कर्तुं वाञ्छति सर्वदा प्रणयिनां प्राणैरपि प्रीणनम् ।
मात्सर्येण विनाकृतः परकृतीः शृण्वन्नहत्युच्चकै
रानन्दाश्रुजलप्लवाप्लुतमुखो रोमाञ्चपीनां तनुम् ॥

(१) अत्र मातृकायां आद्यं पत्रं गलितम् ।

(२) न खलु किं च आज्ञापयत्वार्यः ।

(३) आर्य किं तापसवत्सराजं पश्यन्ति सामाजिकाः ।

स च किल कविरेवमुक्तवान्—मया हि—

न कवित्वाभिमानेन न च व्यामूढचेतसा ।
रचितं नाटकमिदं स्वगोष्ठीभावितात्मना ॥

सा च गोष्ठी—

पदवाक्यप्रमाणेषु सर्वभाषाविनिश्चये ।
अङ्गविद्यासु सर्वासु परं प्रावीण्यमागता ॥

नटी—अय्य किं अवरं विलंबीअदि (१)

(नेपथ्ये)

अहोप्र सा ? (मा) दः स्वामिनः

सूत्र—(आकर्ण्य) आर्ये न कश्चिद्विलम्बः । तथा ह्ययं मम कनीयान्भ्राता धृतकञ्चुकिभूमिक इत एवाभिवर्तते । तदेह्यावामप्यनन्तरकरणीयं सम्पादयावः ।

(इतिष्क्रान्तौ)

## प्रस्तावना

—✽—

(ततः प्रविशति कञ्चुकी)

कञ्चुकी—अहो प्रसा ? (मा) दः स्वामिनः—

हानिर्बलस्य सततं विषयोपभोगे
वाञ्छापि नास्ति शिथिलीकृतविग्रहस्य ।
बाल्योचितैर्मनसिजप्रभवैर्विकारैः
शून्यात्मनः स्खलितमस्य पदं ममेव ॥ १

तत्सर्वथा—

उपालभ्या भूयो न खलु करिणः सम्प्रति जनैः
सहन्ते नीचेभ्यः स्मरमुषितमानाः परिभवम् ।

(१) आर्य किमपरं विलंब्यते ।

क्षितीशो येनायं विषयमु? (सु) खमोहान्धितमना
न पाञ्चालं वेत्ति प्रसभमुपरि न्यस्तचरणम् ॥ २

( निःश्वस्य ) भवतु यथादिष्टमेव सम्पादयामि ।

( परिक्रम्यावलोक्य च ) भो भोः नियोगिनः एष खलु वत्सराजः समाज्ञापयति—

ताराकारं दधानैर्दधतु मणिभुवः करवैर्व्योम लक्ष्मीं
ज्योत्स्नां तन्वन्तु शुद्धाःस्थगितरविरुचो (वे) वीथयः केतकानाम् ।
वक्त्रैर्वाराङ्गनानां श्रिततिलकमिलल्लक्ष्मभिर्भूरिचन्द्राः
सर्वत्रान्तः पुरेऽस्मिन्भवतु कृतपदा कौमुदी वासरेऽपि ॥ ३

तत्क्षिप्रं सम्पाद्यतां देवादेशः ( समन्तादवलोक्य ) अये कथं देवादेशात्सम-नन्तरं प्रारब्धमेव नियोगिभिर्यथादिष्टम् । तद्यावद्देवं पश्यामि, ( विचिन्त्य ) "क्व देवो वर्तते" इति ( पुरोऽवलोक्य ) अये देव्याः प्रत्यासन्नपरिचारिका मालतिका इत एवाभिवर्तते । भवत्वेनां पृच्छामि "क्व साम्प्रतं देवो वर्तत" इति ।

( ततः प्रविशति चेटी )

चेटी—आज्ञप्तास्मि देव्या, यथा शरत्समयो ( प ? ) चितानि प्रसाद ? (ध) नोपकर-णानि मे गृहीत्वा लघु आगच्छेति । तद्यावदेतदनुतिष्ठामि । ( १ )

( परिक्रामति )

कञ्चुकी—( उपसृत्य ) भवति मालतिके किमन्तः पुर एव देवः ।

चेटी—आर्य सुसन्निहितो देव्या वासभवने देवः ।

कञ्चुकी—( सासूयं ) न खलु मृगायां यातः ।

( १ ) अस्याः चेट्याः वाक्यानि प्राकृतभाषयैव निबद्धानि कविना । वैधेयेन मातृकालेखकेन क्वचित् प्राकृतेन क्वचन संस्कृतेन अन्यत्र मिश्रणेन उच्चा-वचं विलिखितानि । पात्रान्तराणामपि आ नाटकपरिसमाप्ति स्खलितानि च असंख्यातानि, तेषां समीकरणं दुश्शकमेव एकमातृकतया ग्रन्थकोशस्य । अतः भ्रान्तं यथामातृकमक्षराणि निवेशितानि ।

चेटी—ण दाव पिअव्वणिउणा वणजीविणो णि हा ? ( ओ ) अभूमिं मे ? (पे) सिअ कोमुदीमहूसवाणुरूवं णेवच्छपरिग्गहं देवीए आदिसिअ अन्तेउराणुचिदं किं पि अपुरवं पेक्खअं पेक्खिदु' णिक्कंतो । ( १ )

कञ्चुकी—( सनिर्वेदमात्मगतं ) अहो विगर्हितेष्वनिर्वेदः ।

परिभूय पुनः प्रख्यममात्यं वर्षरक्षितम् ।
देवेनात्मा स्वयं क्षिप्तो विषमे विषयावटे ॥ ४

( पुरोऽवलोक्य )

कथमितो यौगन्धरायणशिष्यो माणवको देवीभवनाभिमुखं प्रस्थितः हन्त ? कारणेनात्र भवितव्यम् । ( प्रकाशं ) भवति मालतिके गच्छ त्वं स्वनियोगनिष्पत्तये अहमपि देवमेव पश्यामि

( इति निष्क्रान्तौ )

## विष्कम्भकः

( ततः प्रविशति शिष्यः )

शिष्यः—( सनिर्वेदं ) दृढमस्मि निर्विण्णः एतद्दतिनिर्वेदगुरुं अमात्यस्य मन्त्र कंथां वहन्तं ? ( न् ) तं ? एकत्र तावदार्यो जितम् ? तत आगतः तत्र विसर्जित इति रात्रिन्दिनं परिचिन्ताव्यापृतोऽशितमपि अनन्तरं न प्राप्तो सि ? (मि)। अमात्योऽपि स्वामिना प्रतिकूलमाचरता दृढमायासितः पान्थदर्शनेन ? रुमण्वन्मिश्रैः सह संप्रधारितं स्वामिभक्त्या इच्छति विभवस्य चानुरूपम् । तहा अ—वच्छराअपदिकिदिसणाधं ( हं ) चित्त पलहकं समप्पिअ अय्या संकिच्चाअणो राअगिहं पेसिदु' सज्जीकदा । पज्जोदोधिपत्थद ? करणीएसु अवहिदो कदो । सो वि लामकाअणबम्हणो कधभिक्खुवेलंबो पयागे विणिवे (सि) दो । अहं पि से परिचरिदुं चिलुको णिऊविदो । सअं च देविं परिबोधिदुं इच्छदि । मं तज्जेदि जदि एदस्य कज्जस्स कहिं पि उब्बेदो भोदि तदो एवं दे करइस्सं तधा करइस्सत्ति

( १ ) न तावत्......वन जी विन......नियोगभूमिं प्रेषयित्वा कौमुदी महोत्स वानुरूपं नेपथ्य परिग्रहं देव्याः आदिश्य अन्तः पुरानु चितं किमपि अपूर्वं प्रेक्षमाणकं प्रेक्षितु' निष्क्रान्तः ।

वाणरो विअ विणअं सिक्खाविअ माणो ण आणे कधं कधं अत्ताणअं पि धारेमित्ति। पेसिदो म्हि देवीए सआसं, जाव तहिं एव्व गच्छामि। ( परिक्रम्यावलोक्य च ) एसा देवी कंचणमालाए सह किंपि किंपि मन्तअन्ती चिट्ठदि, ता अवसरं पडिवालेमि। ( तथेति स्थितः ) ( १ )

( ततः प्रविशत्यासनस्था देवी काञ्चनमाला च )

काञ्चनमाला—भट्टिदारिए सविसेसं पसाण (हणं) आणत्तिअ णिक्कंतो भट्टा, ता किं णिरूसाहा विअ लक्खीअसि। ( २ )

वासवदत्ता – काञ्चनमाले अहं पि ण आणामि पय्याउलं मे हिअअं। ( ३ )

काञ्चनमाला—ण खु दे भट्टिणा किञ्चि अवरद्धं। ( ४ )

वासवदत्ता—काञ्चनमाले कुदो एव्वं। ( ५ )

शिष्यः—समत्ता एदाणं कधा, ता उवसप्पिअ अमच्चसंदेसं णिवेदेमि। ( उपसृत्य ) सोत्थि भोदीए। ( ६ )

( १ ) तथा च—वत्सराजप्रतिकृतिसनाथं चित्रफलकं समर्प्य आर्यसांकृत्यायनी राजगृहं प्रेषितुं सज्जीकृता। प्रद्योतो (पिप्रस्तु) वरणीयेषु अवहितः कृतः। सोऽपि लामकायनब्राह्मणः कृतभिक्षुवेषः प्रयागे निवेशितः। अहमपि तस्य परिचरितुं चेलको निरूपितः। स्वयं च देवीं परिबोधयितुं इच्छति। मां तर्जयति यदि एतस्य कार्यस्य कुत्रापि उत्भेदः भवेत् तदा एवंते करिष्यामि तथा करिष्यामि इति वानर इव विनय शिक्षाप्यमाणः न जाने कथं कथं आत्मानमपि धारयामीति। प्रेषितोस्मि देव्याः सकाशं यावत् तत्रैव गच्छामि। एषा देवी, काञ्चनमालया सह किमपि किमपि मन्त्र यन्त्री तिष्ठति, तत् अवसरं प्रतिपालयामि।

(२) भर्तृत्वरिके सविशेषं प्रसाधनं आज्ञाप्य निष्क्रान्तो भर्ता, तत् किं निरुत्साहेव लक्ष्यसे।

( ३ ) कांचनमाले अहमपि न जानामि, पर्याकुलं मे हृदयम्।

( ४ ) न खलु ते भर्त्रा किंचिदपराद्धम्।

( ५ ) काञ्चनमाले कुत एवम्।

( ६ ) समाप्ता एतयोः कथा, तदुपसृत्य अमात्यसन्देशं निवेदयामि, स्वस्ति भवत्यै।

वासवदत्ता—( दृष्ट्वा ) साअदं अय्यस्स, कञ्चणमाले देहि से आसणं। ( १ )

शिष्यः—भोदु ठिदो एव्व णिवेदइस्सं। ( २ )

वासव—अय्य भण। ( ३ )

शिष्यः—अमच्चो भणादि, महतेण पओ (अ) णेण गिहीदक्खणं देविं पेक्खिदुं इच्छामित्ति। ( ४ )

वासवदत्ता—अय्य णिवेदी ? ( देहि ) अमच्चस्स गहीदक्खणा एव्वम्हि। ( ५ )

शिष्यः—यधा णिवेदम्हि। ( ६ )

( इति निष्क्रान्तः )

( ततः प्रविशति यौगन्धरायणः )

यौगन्धरायणः—( सखेदं निःश्वस्य )

प्रायः पथ्यपराङ्मुखा विषयिणो भूपा भवन्त्यात्मना
निर्दोषान् सचिवान्भजत्यतिमहाल्लोकापवादज्वरः।
वन्द्याः श्लाघ्यगुणास्त एव विपिने सन्तोषभाजः परं
बाह्योऽयं वरमेव सेवकजनो धिक्सर्वथा मन्त्रिणः॥५

साधु सचिवाग्रेसर रूमण्वन्...यदेवं,... नि त्वया न विषाद (मा) त्मा नीयते तथा हि—

प्रद्योतः स्वसुताप्रवासनविधौ दत्ताभ्यनुज्ञः कृतः,
प्रारब्धा मगधेश्वरेण घटना, तस्तस्रूपायक्रमैः।
देवी मा....केवलं, यदि मनः संस्तभ्य, मत्प्रार्थिते(तं),
कुर्यात्साधु ततो वियोगविषये किन्तु स्त्रियः कातराः॥६

( १ ) स्वागपं आर्यस्य, काञ्चनमाले देहि अस्य आसनम्।

( २ ) भवतु तिष्ठन्नेव निवेदयिष्यामि। ( ३ ) आर्य भण।

( ४ ) अमात्यो भणति—महता प्रयोजनेन गृहीतक्षणां देवीं प्रेक्षितुमिच्छामीति।

( ५ ) आर्य निवेदय अमात्यस्य गृहीत क्षणैवास्मि।

( ६ ) यथा निवेदयामि।

कथितं मे महासेनेन, यथा—त्वदभिमतवस्तुनः परि ... यव ...स्सकाशं प्राज्ञा (ज्ञ) तमो लेखहारकः प्रहित एवेति, भवतु देवीमेव पश्यामि। ( परिक्रम्याव लोक्य च ) इयं देवी यावदुपसर्पामि, ( इत्युपसर्पति )

काञ्चनमाला—( दृष्ट्वा ) भट्टिदारिए अमच्चो आगदो। (१)

वासवदत्ता—( उत्थाय ) अय्य पणमामि। (२)

यौग—देवि चिरमविधवा भर्तुरभ्युदयाकाङ्क्षिणी भूयाः।

वासवदत्ता—( स्वयमुपनीयासनं ) उवविसदु अमच्चो। (३)

( यौगन्धरायण उपविशति )

वासवदत्ता—कंचणमाले किं पि आय्यो भणिदुं इच्छदि। ता मुहुत्तअं दुवारे होहि।

यौगन्धरायणः—तिष्ठतु अभिन्नैवेयं भवत्याः। (४)

वासवदत्ता—भणादु अय्यो। (५)

यौगन्धरायणः—आयुष्मति

कौशाम्बीं परिभूय नः कृपणकैर्विद्वेषिभिः स्वीकृतां
जानास्येव तथा प्रमादपरतां पत्युर्नयद्वेषिणः।
स्त्रीणां च प्रियविप्रयोगविधुरं चेतः सदैवात्र मे
वक्तुं नोत्सहते मनः परमतो जानातु देवी स्वयम् ॥७

( वासवदत्ता कांचनमाले ? ( लां ) दृष्ट्वा सबाष्यमधोमुखी तिष्ठति )

कांचनमाला—( सखेदमात्मगतं ) हद्धि ववसिदं अय्येण किं पि। (६)

( सापि तथैवास्ते )

( प्रविश्य प्रतीहारी )

प्रतीहारी—उज्जेणीदो लेहेण मणुस्सो आगदो। (७)

काञ्चनमाला—पविसदु किं पुच्छीअदि। (८)

वासवदत्ता—कंचणमाले अमच्चो जाणादि। (९)

---

(१) भर्तृदारिके अमात्य आगतः। (२) आर्य प्रणमामि। (३) उपविशतु अमात्यः।
(४) काञ्चनमाले किमप्यार्यो मन्त्रयितुमिच्छति। तत् मुहूर्तं द्वारे भव।
(५) भणतु अर्यः (६) हाधिक् व्यवसितमार्येण किमपि।
(७) उज्जयिनी तो लेखेन मनुष्य आगतः।
(८) प्रविशतु किं पृच्छयते। (९) काञ्चनमाले अमात्यो जानाति।

यौगन्धरायणः—( स्वगतं ) नूनं तेनैव भवितव्यं लेखहारकेण ( प्रकाशं ) प्रविशतु।

प्रतीहारी--जं अय्यो आणवेदि। (१)

( इति निष्क्रान्ता प्रतीहारी )

( ततः प्रविशति लेखहस्तः पुरुषः प्रतिहारी च )

पुरुषः—

पेच्छीहमि अय्य दूधलं अय्य चिलस्स हगे शमूशुए।
अवहस्तिदपधपल्लिश्शमे तोलविदे तुलिदे विशप्पदे ॥८ (२)

( उपसर्पति )

कांचनमाला—कथं त्व ( तु ) रिदओ आगदो। (३)

वासव—( दृष्ट्वा ) कंचनलमाले ण हु त्व (तु) रिद अं तादो अप्पेण पओअणेण पेसेदि। (४)

पुरुषः—( उपसृत्य ) जेदु भट्टिदारिआ। (५)

वासवदत्ता—तुरिदअ कुसलं तादस्स अज्जाणं ? (म्बाणां) च। (६)

पुरुषः—अय्य दूदे कुसलं, इत्तिअं पु (उ) ण दुक्खकालणं यं ? तुवं ण पेच्छेदि। ७

( लेखमुपनयति )

वासवदत्ता—(गृहीत्वा कांचनमालाया अर्पयित्वा प्रतीहारीमुद्दिश्य) हला विस्सामेहि तुरिदअं।

प्रतीहारी—जं देवी आणवेदि। (९)

( इति निष्क्रान्तौ )

---

(१) यदार्य आज्ञापयति। (२) पश्यामि अद्य दुहितृकुलं अद्य चिरस्य अहं समाश्वसितः। अपहस्तितपथ परिश्रमः...तुलितः विसर्पामि।

(३) कथं त्वरितक आगतः।

(४) काञ्चनमाले न खलु त्वरितकं तातः अल्पेन प्रयोजनेन प्रेषयति।

(५) जयतु भर्तृदारिका।

(६) त्वरितक कुशलं तातस्य आर्याणाञ्च ( अम्बानां इति स्यात् )

(७) आर्ये दुहितः कुशलं—एतावत् पुनः दुःखकारणं यत् त्वं न प्रेक्ष्यसे।

(८) हला विश्रामय त्वरितकम्। (९) यद्देवी आज्ञापयति।

वासवदत्ता—कंचणमाले उवणेहि अय्यस्स। (१)

( कांचनमाला गृहीत्वोपनयति )

यौगन्धरायणः—कांचनमाले वाचय त्वमेव।

कंचनमाला—( तथा करोति )

"स्वस्त्युज्जयिन्या महाराजः प्रद्योतः कल्याणिनीं वासवदत्तां शिरस्युपाघ्राय परिबोधयति—

वत्से त्वां स्वजनाशिषामविषयं पत्युः प्रसादैर्गतां

श्रुत्वाहं सुखितः

वासवदत्ता—कधं लज्जावेदि मं तादो। (२)

काञ्चनमाला— तथाप्यनुदिनं दोधूयते मे मनः।

आसज्जन्विषयेषु कार्यविमुखो यन्नत्वया वार्यते

जामातेति विहाय तन्मयि रुषं स्वार्थस्स्वयं चिन्त्यताम् ॥६

संक्षेपतश्चाभिधीयते—

अपि जीवितसंशयेन(३) वत्से हृदयात्स्त्रीसुलभं विहाय मोहम्।

उपमानपदं पतिव्रतानां चरितैर्यासि यथा तथा विधेहि ॥१०

यौगन्धरायणः—साधु महासेन साधु नापत्यस्नेहात्कर्तव्यमतिक्रान्तोऽसि।

वासवदत्ता—(आत्मगतं) किं वअ ? उद्दिसिअ तादो मे संदिसदित्ति पय्याउलम्हि। (४)

( इति तथैवास्ते )

यौग—( दृष्ट्वा आत्मगतं ) यथेयं लेखवाचनानन्तरमेव पर्याकुलतामागता, तथा जाने अङ्गीकृत मेवास्मत्समीहितमनया। ( प्रकाशं ) किमवस्थितं चेतसि देव्याः।

वासवदत्ता-(आनतवदनैव) णम्हि अज्ज (य्य) स्स समीहितपच्चत्थिणी, भणादु अय्यो जं मए जधा कादव्वं। (५)

---

( १ ) काञ्चनमाले उपनय आर्यस्य।

( २ ) कथं लज्जापयति मां तातः। ( ३ ) "संशयो न" इति मूले दृश्यते।

( ४ ) किमिवोद्दिश्य तातो मे सन्दिशतीति पर्याकुलास्मि।

( ५ ) नास्मि आर्यस्य समीहितप्रत्यर्थिनी, भणतु आर्यः यन्मया यथा कर्त्तव्यम्।

यौगन्धरायणः—(आत्मगतं) साधु पतिव्रते साधु ( काञ्चनलां संज्ञयाहूय बाष्पस्तंभमभिनयन् कर्णे ) एवमेव।

काञ्चनमाला—( सकरुणं त्रासमभिनीय वासवदत्तायाः कर्णे ) एवमेव।

वासव—(श्रुत्वा स्वगतं) हा अय्यउत्त लब्भसि पेक्खिदुं (इति मूर्छां नाटयति) (१)

यौगन्धरायणः—( स्वगतं ) अहो दुष्करमध्यवसितमस्माभिः।

आपात एव विकृतिं मोहेन प्रकृतिकातरा गमिता।
व्यसनार्णवं तरिष्यति वियोगविधुरा कथं पत्युः ॥११॥

अथवा अत्रापि प्रतिविधातुं चिन्तितमेव।

काञ्चनमाला—अमच्च समस्सासेहि देविं। ( २ )

यौगन्धरायणः—देवि समाश्वसिहि समाश्वसिहि।

वासवदत्ता—( संज्ञां लब्ध्वा बाष्पं परिमार्जयन्ती ) अय्यउत्तो उण कधं। ( ३ )

यौग—( स्वगतं सखेदबाष्पः ) किं ब्रवीमि, ( विचिन्त्य ) भवत्वेवं तावत्। ( अन्यतो बाष्पं विधूय सौष्ठवं नाटयन् ) देवि शीलज्ञैवासि देवस्य।

वासवदत्ता—( आत्मगतं ) कथं विरओ आवुत्तन्त? ण मं धीरेदि तधा वि णाम ( प्रकाशं ) अमच्चोजाणादि। ( ४ )

( नेपथ्ये वन्दी पठति )

संघट्टारणिताङ्गदाः क्षितिभुजः पादप्रणामस्खल-
च्चूड़ा (रत्न) मरीचिचुम्बितभुवः स्वान्स्वान् गृहान्प्रस्थिताः।
देवोऽपि प्रमदाकरार्पितकरः क्रीड़ाः समासेवितुं
शुद्धान्तं समुपैति मन्त्रिवृषभैरुद्व्यूढपृथ्वीभरः ॥ १२

यौग—( श्रुत्वा ) देवि सम्प्रति देवीव्यवसायेनामुना यदि परं वन्दिनः सत्यवादिनो भविष्यन्ति तदागतो देवः। सम्प्रति, यथास्य वस्तुनो मनागपि निर्भेदो न भविष्यति तथा देवी प्रमाणम्। ( उत्थाय ) किं बहुना—

---

( १ ) हा आर्य पुत्र लक्ष्यसे प्रेक्षितुम्। ( २ ) अमात्य समाश्वासय देवीं।

( ३ ) आयपुत्रः पुनः कथम्।

( ४ ) कथं विरहः आवर्तमानः न मां धीरयति। तथापि नाम अमात्यो जानाति।

सद्वंशकथितमार्गा भवविषयनदीरयोह्यमानस्य ।
भर्तुः प्रतीपतरणे नौरिव बहुभिर्गुणैर्युक्ता ॥ १३

(किञ्चित्परिक्रम्य) तद्यावदहमपि देव्या महानुभावतां रुमण्वते निवेद्य यथासमीहितं सम्पादयामि ।

(इति निष्क्रान्तो यौगन्धरायणः)

(ततः प्रविशति राजा विदूषकश्च)

राजा—(सानन्दं) अहो नु खलु भोः—

तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा
तद्गोष्ठ्यैव निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः ।
तां संप्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे
बद्धोत्कण्ठमिदं पु ? (म)नः किमथवा प्रेमा समाप्तोत्सवः ॥ १४

विदूषकः--भो तुवर तुवर, पज्जुसुआ देवी चिट्ठदि । (१)

राजा—गच्छ गच्छ ।

विदूषकः—(पुरोऽवलोक्य) ऐसा देवी चिट्ठदि । (२)

राजा—(सोत्सुकं सवितर्कं च दृष्ट्वा) वयस्य ।

किं कर्णे नवकेतकोदलरुचा शोभा न सम्पादिता
प्रत्यग्रं न मृणालमालवलयं पाणौ समारोपितम् ।
नीलाब्जच्छदलाञ्छितास्सुमनसो नोत्तंसिताः किं यथा
प्रेयान्मे ललितः प्रसाद (ध)नविधिर्देव्या न सम्पादितः ॥ १५

विदूषकः—भो तक्केमि संपदं अलङ्कारइस्सदि । (३)

(प्रविश्य)

चेटी—(पट (ल) क मपनीय) देवि इदं सरदसमओचिदं पसाधणअं, पसादेदु देवी । (४)

---

(१) भो त्वरस्व त्वरस्व, पर्युत्सुका देवी तिष्ठति ।
(२) एषा देवी तिष्ठति ।
(३) भोः तर्कयामि सांप्रतमलंकारयिष्यति ।
(४) देवि इदं शरत्समयोचितं प्रसाधनं, प्रसाधयतु देवी ।

वासवदत्ता—अवणेहि अणवसरो संपदं एदस्स । ( १ )
चेटी—भट्टिदारिए कधं विअ । ( २ )
वासव—( ससंवरणं ) आगदो एव्व अय्यउत्तो, ( उत्थाय ) जअदु अय्यउत्तो ( ३ )
राजा—देवी पश्य

फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकरा
स्तन्वीयं जघनस्थलोरुपुलिना रोमावली निम्नगा ।
प्रत्यंगेषु नवैव सम्प्रति शरल्लक्ष्मीरियं दृश्यते
तच्चिह्नैरधुना प्रसाधनविधौ बद्धो बृथैवादरः ॥ १६

( इति हस्ते गृहीत्वोपवेशयति )

( निपुणं निर्वर्ण्यात्मगतं )

मुषितमस्त्रुजलैर्नयनाञ्जनं श्वसितधूसरितोऽधरपल्लवः ।
तनुरियं तनुतामिव लम्भिता किमिव मन्युमना इव लक्ष्यसे॥१७

विदू—( आत्मगतं सविमर्शं ) जधा एसा तक्खणोप्फुंसितबाहविरलंजणे अब्भुच्छणारुणे अ णअणे समुव्वहदि तधा तक्केमि किं पि ववसिदं अमच्चाणं पडिवण्णं महाणुभावाए देवीएत्ति । ( ४ )
वासव—( साकुला जनान्तिकं ) कंचणमाले अज्ज अधिअं रमणीओ अय्यउत्तो, इअं वि णिब्भरोब्भरंतबाहपय्याउला ण देदि पेक्खिदुं दिट्ठी, अणीसम्हि । अत्तणो किं ति वा पुच्छिदा भणिस्सम् । ( ५ )

( १ ) अपनय अनवसरः सांप्रतमेतस्य । ( २ ) भर्तृदारिके कथमिव ।
( ३ ) आगत एव आर्यपुत्रः । जयतु आर्यपुत्रः ।
( ४ ) यथैषा तत्क्षणोत्फुंसितबाष्पविरलाञ्जने अभ्युक्षणारुणे च नयने समुद्वहति, तथा तर्कयामि किमपि व्यवसितं अमात्यानां प्रतिपन्नं महानुभावया देव्या इति ।
( ५ ) काञ्चनमाले अद्य अधिकं रमणीय आयपुत्रः । इयमपि निर्भरो ( द्रवत् ) बाष्पपर्याकुला न ददाति प्रेक्षितुं दृष्टिः । अनीशास्मि । आत्मनः किमिति वा पृष्टा भणिष्यामि ।

काञ्चन—( बाष्पमापिबन्ती जनान्तिकं ) देवि पय्यवत्थावेहि अत्ताणअं, पडिवण्णं अमच्चाणं वअणं, पडिवअणं वुण भट्टिणो अहं दइस्सं । ( १ )

वासवदत्ता— ( निश्वस्याकारसंवरणं नाटयति )

राजा—अयि देवि ।

वहसि सहसा दृष्टा दृष्टिं वृतास्थ ? (स्र) लवाकुलां
विधृतविषमोद्भिन्नैः श्वासैर्विकम्पिपयोधरा ।
वदसि न चिरं ध्यानक्षामा मयि स्थिरकौतुके
पुनरपि गता किं त्वं मुग्धे तदेव वधूव्रतम् ॥ १८

वासवदत्ता— ( काञ्चनमालां पश्यति )

काञ्चनमाला—भट्टिदारिअ भट्टिणीए तादसआसादो तुरिदओ आगदो । ( २ )

राजा—( साकुलं ) अपि कुशलं तत्र ।

काञ्चनमाला—कुशलं ।

राजा—( विहस्य ) तत्किं ज्ञातिगृहवार्तैव खेदहेतुः ।

विदूषकः—भो मा एव्वं भण, एसा खु दासीए दूधा णादिउलपउत्तो अवस्सं अदुक्खिदं वि इत्थोअणं रोदावेदि । ( ३ )

काञ्चनमाला—णहु पउत्तिमेत्तकं एव्व खेदकारणं । ( ४ )

राजा—( साशंकं ) किमन्यत् ।

काञ्चन—संदिट्ठं से तादे ण, जहा जादे ण तुवं जहिच्छिदेहिं मंगलेहिं जामादुअस्स (स) मप्पिदित्ति अणुदिअसं रोअन्ती जणणी दे मं रोदावेदि ( त्ति ) । एदं च सुणिअ भट्टिदारिआ तधा पय्याउलहिअआ, जधा कधं पि अम्हेहिं पय्यवत्थावीअदि । ( ५ )

---

( १ ) देवि पर्यवस्थापयात्मानं, प्रतिपन्नममात्यानां वचनं । प्रतिवचनं पुनः भर्तुरहं दास्यामि । ( २ ) भर्तृदारक भट्टिन्याः तातसकाशात् त्वरितक आगतः ।

( ३ ) भो मा एवं भण, एषा खलु दास्याः दुहिता ज्ञातिकुलप्रवृत्तिः अवश्यं अदुःखितमपि स्त्रीजनं रोदयति । (४) न खलु प्रवृत्तिमात्रमेव खेद कारणम् ।

( ५ ) सन्दिष्टं अस्यास्तातेन,-यथा-जाते न त्वं यथेष्टैर्मङ्गलैः जामातुः समर्पितेति अनुदिवसं रुदन्ती जननी तव मां रोदयति ( इति ) । एतच्च श्रुत्वा भर्तृदारिका तथा पर्याकुलहृदया यथा कथमप्यस्माभिः पर्यवस्थाप्यते ।

राजा—( किञ्चिद्बाष्पमात्मगतं ) स्थानमेतस्याः खेदस्य ( प्रकाशं स्मित्वा ) अयि देवि ।

दृष्टिं प्रेमभरालसां मयि मुहुर्विन्यस्य लज्जावती
कालस्याहमिहासहेत्यविरतं प्रत्यर्पयन्ती मनः ।
जाता देवि तदा ममापनयने हेतुस्त्वमेवाधुना
किं सन्देशनवीभवत्कुलगृहोत्कण्ठाधिकं ताम्यसि ॥ १९

दृष्टिं समर्पय ममैव किमश्रुपूरैः
श्वासोऽधरं स्पृशति नावसरो ममात्र ।
(अङ्गा) नि तानवमिदं त्यजतु प्रसीद
पर्युत्सुके मयि कुरु प्रणयं पुरेव ॥ २०

( प्रविश्य )

कञ्चुकी—मृगव्यभूमेः कुरङ्गसारङ्गकौ प्राप्तौ द्वारि तिष्ठतः ।

राजा—( सादरं ) अनवरतं प्रवेशय ।

कञ्चुकी—यदाज्ञापयति ।

( इति निष्क्रान्तः )

( प्रविश्य )

शबरौ—( सविस्मयमुपसृत्य ) भट्टा अच्चरिअं अच्चरिअं, जा सा भट्टिणा पत्तिपारद्धीए परिक्कत्ता वणराई तं वामदो अदिक्कमिअ अदिमेत्तं जीवाइण्णा रण्णभूमिः ? अण्णं च, भट्टा जो खु सो बहुसो खोज्व ज्जु आअरणा ? णिउणेहिं पि अम्हेहिं ण समासादिदो सो एव्व दढदाढाविसमसमुल्लिहित-सीहरुहिरोवरत्तकखडक्खंधविभत्तसढवल्लरीविअरिल्लविरइअधीराभरणो, रणरणाअन्तखरखुरउक्खडिदसेलकडअन्तरो, णिरन्तरघणघोणाकोणुक्किण्ण, कमलिणीकंधविद्दाविदसूरकरसन्दावो, तहिं एव्व सं ? ( व ) जुलणिउँजपच्चासण्णे पविरलंतरे वि (वा) णीरणलत्थंबे पडिल्थिरिबद्धत्थाहो सुवे ? उम्हाअन्तो एव्व देवस्स दंशिअदि एक्कलकालो । ( १ )

( १ ) भर्तः आश्चर्यमाश्चर्यं, या सा भर्त्रा...परिक्रान्ता वनराजिः तां वामतः

राजा—सत्यं ?

द्वितीयः—सच्चं सच्चं, सव्वापि सेणा महीए चलणेहिं झोखु सिहरजलदसदणिभं वहमाणो कबिलकेसरुक्करं अञ्जणगिरिगरुओ रक्खिअ अरण्णं परिब्भमइ। (१)

राजा—तेन हि तिष्ठतु तावत्कौमुदीमहोत्सवः; याममात्रशेषायां रजन्यामितोऽस्माभिर्गन्तव्यम्। देवि श्वः कर्तास्मि महोत्सवम्।

वासवदत्ता—(बाष्पमन्यतो विधूयात्मगतं) ण आणदि परमत्थं अय्यउत्तो (प्रकाशं) जधा अय्यउत्तस्स रोअदि। (२)

राजा—वसन्तक दापयाङ्गपारितोषकम्।

विदूषकः—(उत्थाय सासूयमात्मगतं) एदेहिं दासीपुत्तेहिं अलिअं अलिअं इदो सूअरो इदो सूअरोत्ति आचक्खिअ णिस्सुवण्णं कदं राअउलं। अथवा एदिसं अणत्थासत्तं एदं जाणिअ कोवा ण विल (लु) म्पिदुं इच्छेदि। ता दासीए पुत्ता ? पत्थदं एव्व अमच्चेहिं तधा जधा ण पुणो वि मं आयासेह ? (३)

(इति ताभ्यां सह निष्क्रान्तः)

---

अतिक्रम्य अतिमात्रं......अरणभूमिः। अन्यच्च, भर्तः यः खलु सः बहुशः......अरण्य ? निपुणैरप्यस्माभिः न समासादितः स एव दृढदंष्ट्रा विषमसमुल्लिखित...रुधिरोपरक्त...स्कन्ध विभक्त...वल्ली यिचकिलविरचितघीराभरणः, रणरणायमानखरखुरोत्खण्डितशैलकटकान्तरः, निरन्तर घनघोणाकोणोत्कीर्णकमलनी क (न्द) पिद्राबितसूर्यकरसन्तापः, तस्मिन्नेव स ? (व) ञ्जुलनिकुञ्जप्रत्यासन्ने प्रविरलान्तरे वी ? वानीरनलस्तम्बे... ऊष्मायमाणः एव देवस्य दृश्यते एकलकोलः।

(१) सत्यं सत्यं सर्वापि सेना मह्या चरणैः ?......शिखरजलदशतनिभं वहन् कपिलकेसरोत्करं अञ्जनगिरिगुरुः (रक्षितः) अरण्यं परिभ्रमति।

(२) न जानाति परमार्थं आर्यपुत्रः। यथा आर्य पुत्रस्य रोचते। ।2

(३) एतदास्याः पुत्रैः अलीकमलीकं इतस्सूकरः इतस्सूकरः इति आचक्ष्य निस्सुवर्णं कृतं राजकुलं। अथवा ईदृशमनर्थासक्तं एवं ज्ञात्वा को वा न लुंपितुमिच्छति, तत् दास्याः पुत्राः ? प्रस्तुतमेवामात्यैः तथा यथा न पुनरपि मां आयासयथ ?।

( नेपथ्ये )

उत्सर्पद्धूमलेखात्विषि तमसि मनाग्विस्फुलिङ्गायमानै
रुद्भेदैस्तारकाणां वियति परिगते पश्चिमाशामुपेतैः ।
खेदेनेवानतासु स्खलदलिरशनास्वब्जिनीप्रेयसीषु
प्रायः सन्ध्यातपाग्नौ विशति दिनपतौ दह्यते वासरश्रीः ॥ २१

राजा—( सहर्षं ) अये कथमवसितमहः । ( समन्तादवलोक्य ) अहो रामणीयकमन्तःपुरे प्रदोषारम्भस्य । तथाहि—

प्रारब्धो मणिदीपयष्टिषु समं पातः पतंगैरितो
गन्धान्धैरभितो मधुव्रतकुलैरूपक्ष्मभिः स्थीयते ।
वेल्लद्बाहुलताविलोलवलयस्वानैरितः सूचित-
व्यापाराः प्रतियोजयन्ति विविधा नगराङ्गना वर्णकान् ॥२२

राजा—तदेहि वासगृहं प्रविशावः ( उत्थाय परिक्रामन् ) देवि दीयतामितो दृष्टिः—

न्यस्यन्त्यो धनसारसारशकलान्याथोजयन्त्यः स्रजो
विस्रम्भप्रतिभेदिपञ्जरशुकान्निर्गासयन्त्यो बहिः ।
एता रत्नकरङ्किकार्पितकराः कुर्वन्ति सख्यः समं
लीलावासगृहस्य भासुरसखीरम्यां प्रदोषश्रियम् ॥ २३

वासवदत्ता—( दृष्ट्वा सास्रमात्मगतं ) किं मे मन्दभाइणीए दंसेसि ।

( इति निष्क्रान्तास्सर्वे )

इति तापसवत्सराजचरिते

प्रथमोऽङ्कः



श्रीः

# तापसवत्सराजचरितम्

## द्वितीयोऽङ्कः

( ततः प्रविशति रुमण्वद्भ्राता विनीतभद्रः )

विनीतभद्रः—( निश्वस्य सास्त्रं ) अहो दुष्करमध्यवसितममात्यैः । अतिकष्टं दृष्टवानस्मि

गृहीत्वा मुञ्चन्ती कथमपि गृहाशोकलतिकां
निवर्त्य व्यावृत्तैः प्रियमपि बलादेणकशिशुम् ।
इतो देवीत्येवं वदति सचिवे दुःखविषमं
प्रवृत्ता सन्नाङ्गी गृहमभिपतन्त्यैव हि दृशा ॥ १

इदं च मे कष्टतरमिव प्रतिभाति—

मामुद्दिश्य तथा देव्या बाष्पसंरुद्धकण्ठया ।
आर्यपुत्रं प्रतीत्युक्तं वक्तव्यं न समाहितम् ॥ २

( अश्रूणि प्रमृज्य ) कियद्वा रुद्यते, निसर्गकर्कशा एव नयवेदिनां प्रवृत्तयः । ( परिक्रम्यावलोक्य च ) अये नाद्यापि कथं तदारभ्यते ।

( नेपथ्ये कलकलः )

विनीतभद्रः—( श्रुत्वा दृष्ट्वा च ) कथमादीपितमन्तः पुरम् । तथाहि—

पाण्डुश्यामपृथूरुपान्तविलसद्भ्रू त्विषश्चक्रुधां ?
नीतस्यानिलघट्टनैरनुघनच्छायाभ्रमं बिभ्रतः ।
धूमस्यास्य करालितोदरभुवो मूलाद्धगित्युद्धता
नश्यल्लोकविलोक्यमानमहसो वह्नेः शिखाश्रेणयः ॥ ३

अपि च—

धूमौघान्निर्गताभिः कवलितककुभः ? कालवक्त्रातिभाभि
ज्वालाजिह्वालताभिर्दिवमखिलजगद्ग्रासलो? लेलिहानः ।
हाहाकारैर्जनानामनुसृतविषमोद्गारगम्भीरनादः
कल्पान्तभ्रान्तचामीकरशिखरनिभो याति विस्तारमग्निः ॥४

हा धिक्कष्टम् ।

उड्डीनैर्मणिपञ्जरादपि शुकै भ्रान्तं स्फुलिङ्गान्तरे
रक्ताशोकवनाशया हरिणकैर्ज्वालासु विश्रम्यते ।
धूमश्यामनभस्स्फुरत्तनुशिखः कूजद्भिरन्वीयते
सोत्कण्ठैः शिखिभिः शिखी परिचयान्मेघस्तटित्वानिव ॥५

इदमपरमपि दारुणम्—

कुब्जैः सङ्कोचवद्भिः कथमपि पलितोत्थापिताङ्गैः प्रयातं
न्यस्तैः ? क्रीड़ाशुकानामुपरि कृतपदैर्वामनैर्दग्धमेव ।
क्रन्दन्त्येते च मूकाः किमपि ततभुजव्यात्तवक्त्रानुमेयं
वेगेनोड्डीय दूरं पुनरभिपतिता वापिकामेव हंसाः ॥ ६

( नेपथ्ये )

देव समाश्वसिहि समाश्वसिहि, समस्ससदु समस्ससदु पिअवअस्सो। ( १ )

विनीतभद्रः—( श्रुत्वा दृष्ट्वा च सकरुणं ) अये कथमागत एव देवः श्रावितश्च, तथा ह्ययम्—

(२)शोकेन कृतस्तम्भस्तथा स्थितो येन वर्धिताक्रन्दैः ।
हृदयस्फुटनभयार्तै ( रोदितु ) मभ्यर्थितस्सचिवैः ॥ ७

अतिकरुणं च वर्तते तदितोऽपसृत्य कार्यशेषं प्रतियोजयामि ।

( इति निष्क्रान्तः )

॥ विष्कम्भकः ॥

---

( १ ) समाश्वसतु समाश्वसतु प्रियवयस्यः ।

( २ ) इदं पद्यं श्रृङ्गारप्रकाशे द्वात्रिंशे करुणस्वरूपभेदप्रपञ्चप्रकरणे दृष्टश्रुतानुभूत

( ततः प्रविशति रुमण्वद्वसन्तकाभ्यां सहितो राजा )

रुमण्वान्—( जनान्तिकम् ) अहो दुष्करमुपक्रान्तम्, न जाने किं प्रपत्स्यते विधिः। ( प्रकाशं सकरुणं ) देव किमेवं मूढ़स्तिष्ठसि। समाश्वसिहि समाश्वसिहि समाश्वासय चास्मान्।

विदूषकः—( सकरुणं ) भो पसीद, करेदु भवं बप्फ? मोक्खं, किं ण सुमरदि भवं, तधा बन्धुअणं परिच्चइअ आगच्छंतीए तस्सिं अडइ? कंतारे अइरोग्गददब्भ सूचीविसमाए भूमीए "ण हु दे परिक्खदं चलणन्ति" पुच्छिदाए णत्थित्ति णिगूढिअ णिअवेअणं पत्थिदं एव्व देवीए। (१)

राजा—हा देवि सत्यमेव दग्धासि, ( मूर्च्छितः पतति )

रुमण्वान्—समाश्वसतु देवः।

राजा—( समाश्वस्य सहसोत्थाय सखेदं ) रुमण्वन् मुञ्च मुञ्च किं मां निवारयसि।

क्षुद्राग्नेरमुतोऽपि धूमकलुषात्त्रिप्रस्थितेः सर्वतो
ज्वालाडम्बरकारिणः किमपरं भीतोऽस्य भाग्यैर्मम।
अन्तर्बद्धपदं न पश्यसि सखे शोकानलं येन मा
मेवं वारयसि प्रियानुसरणात् पापं करोम्यत्र किम्॥ ८

---

शंकितरूपभेदचतुष्टयवतः प्रमाणाश्रयप्रभेदस्य, द्वितीयावान्तरभूतश्रुताख्य-भेदस्य उदाहरणतया गृहीतम्। तत्रास्य आद्ये तुरीये च पादे पाठभेदो दृश्यते-यथा—"श्रुत्वैव विधृतबाष्पः, रोदितु मभ्यर्थ्यते सचिवैः" इति। इदमेव पाठद्वयं समञ्जसतया भाति—यथा—पूर्वत्र विनीतभद्रवाक्यं—"अये कथमागत एव देवः श्रावितश्च तथा ह्ययं—" इत्युपक्रम्य पद्यमिदमवतारितं। उत्तरत्र विदूषक-वाक्ये "पसीद करेदु भवं बप्फमोक्खं" इति स्तंभितस्य बाष्पस्य मोक्षः प्रार्थ्यते; श्रवणं वाष्पस्तम्भश्च प्राकरणिकौ भवतः। सचिवैरभ्यर्थना च अवि-च्छिन्ना क्रियमाणा अवगम्यते। अतः "अभ्यर्थ्यते" इति वर्तमानतैव श्रेयसी।

(१) भो प्रसीद, करोतु भवान् बाष्पमोक्षं। किं न स्मरति भवान्—तथा बन्धुजनं परित्यज्य आगच्छन्त्या तस्मिन्......कान्तारे अचिरोद्गतदर्भसूचीविषमया भूम्या "न खलु तव परिक्षतः चरणः" इति पृष्टया नास्तीति निगूह्य निजवेदनां प्रस्थितमेव देव्या।

प्रिये वासवदत्ते ।

दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न किं
स्नेहार्द्रं हृदयं न चन्दनरसस्पर्शानि चाङ्गानि वा ।
कस्मिँल्लब्धपदेन किं कृतमिदं क्रूरेण दग्धाग्निना
नूनं वज्रमयोऽन्य एव दहनस्तस्येदमाचेष्टितम् ॥ ९

( सहसोत्थाय ) आः पाप पावक

यत्तर्पितोऽसि गुरुणा मम खाण्डवे त्वं
गाण्डीविना सुरपतेरवधूय दर्पम् ।
तस्योपकारकरणस्य फलं किमेत-
द्धिक्सर्वथा भव त ? (तु) वा दहनात्किमन्यत् ॥ १०

विदूषकः—(सविशेषकरुणं हस्तमवधूय) पमादो पमादो कधं सो देवीए पुत्तिअकिदको हरिणपोदको अत्तभवन्तमणुसरदि । (१)

राजा—( दृष्ट्वा सकरुणं )

धारावेश्म विलोक्य दीनवदनो भ्रान्त्वा च लीलागृहा-
न्निश्वस्यायतमाशु केसरलतावीथीषु कृत्वा दृशम् । (२)
किं मे पार्श्वमुपैषि पुत्रक कृतैः किं चाटुभिः क्रूरया
मात्रा त्वं परिवर्जितः सह मया यान्त्यातिदीर्घां भुवम् ॥ ११

विदूषकः—( जनान्तिकं ) अमच्च एवं पिअवअस्सं पेक्खिअ सम्पदं किं भणासि । (३)

रुमण्वान्—( सास्रं जनान्तिकं ) सखे किमन्यत् ।

---

(१) प्रमादः प्रमादः कथं स देव्याः पुत्रककृतकः हरिणपोतकः अत्रभवन्तमनुसरति ।

(२) कुन्तककृते वक्रोक्तिजीविते तृतीयोन्मेषे "दृशः" इति बहुवचनान्तपाठो धृतः ।

(३) अमात्य एवं प्रियवयस्यं प्रेक्ष्य सांप्रतं किं भणसि ।

रिपुर्यातु परामृद्धिं धिग्राज्यमनयोऽस्तु नः।
दैवमेवंविधं दृष्ट्वा जाने प्रत्यर्पयामि ताम् ॥ १२

विदूषकः—तुवं जाणासि। (१)

रुमण्वान्—( बाष्पमवधूय जनान्तिकं ) आर्य यथा तथा समाश्वासय राजानम्। ( आकर्ण्य ) अये कथमयं क्षते क्षारावसेकः।

विदूषकः—( दृष्ट्वा ) आम सो एव्व एसो "हा देवित्ति" वाहरन्तो खणं पि ण वीसमदि राअसुओ। (२)

राजा—( श्रुत्वा दृष्ट्वा च ) अये

कर्णान्तस्थितपद्मरागकलिकां भूयः समाकर्षता
चञ्च्वा दाडिमबीजमित्यभिहता पादेन गण्डस्थली।
येनासौ तव तस्य नर्मसुहृदः खेदान्मुहुः क्रन्दतो
(३)निश्शूकं न शुकस्य किं प्रतिवचो देवि त्वया दीयते ॥ १३

( इति मूर्च्छितः पतति )

विदूषकः—( साकुलं ) समस्ससदु समस्ससदु भवं, कीस तुवं अत्तणो णिरवेक्खो अम्हे परिच्चअसि। (४)

रुमण्वान्—( सधैर्यावष्टम्भं ) स्वामिन् समाश्वसिहि समाश्वसिहि।

आकल्पं जगतोऽवसानविरसा सैवैव सृष्टिः स्थिता
जानास्येव यथा सुखानि नियतं जातानि दुःखैस्समम्।
कः शोकावसरोऽत्र पूर्वपुरुषैरासेवितः सेव्यतां
पन्थाः किं क्रियते त्वयेदृगधुना संसारबाह्यं मनः ॥ १४

राजा—( परिवृत्य रुमण्वन्तं प्रति सप्रणयकरुणं ) सखे किं मां प्रबोधयसि, तथाहि—

(१) त्वं जानासि। (२) आं स एव एषः "हा देवि" इति व्याहरन् क्षणमपि न विश्राम्यति राजशुकः। (३) निश्शूकं—"शू" इति शुक चोदनशब्दानुकरणम्।
(४) समाश्वसतु समाश्वसतु भवान् कस्मात् त्वं आत्मनः निरपेक्षः अस्मान् परित्यजसि।

संज्ञाफूत्कृतपूरिताद्रिकुहरैस्तैर्म्लेच्छकौदण्डिकैः
व्याप्ते वर्त्मनि संसृजद्भिरभितः क्रूरान्पृषत्कोत्करान्
विच्छिन्नापि मया पुनःपुनरसौ सोरःप्रहारं पुर-
स्तिष्ठन्ती स्खलिताकुलैरवयवैर्देवी न दृष्टा त्वया ॥ १५

विदूषकः—एवं णूदं ? तधावि सअं एव्व पय्यवत्थावेहि अत्ताणअं, को भवन्तं परिबोधिदुं पारेदि। (१)

राजा—( सहसोत्थाय ) हा देवि।

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्वि ? (न्धि) तेन दहनेन न वीक्षितासि ॥ १६

( प्रविश्य कञ्चुकी )

कञ्चुकी—( पृष्ठतोऽवलोकयन् सास्रं सहसोपसृत्य जनान्तिकं ) अमात्य महासेनलेखहारको द्वाराभिमुखमागच्छति, तदमात्यः प्रमाणम्।

रुमण्वान्—( साकुलं जनान्तिकं ) तथा तथा विधार्यतां तावत्।

( निष्क्रान्तः कञ्चुकी )

( ततः प्रविशति कञ्चुकिना विधार्यमाणस्तमवशूया? ( य ) पठाक्षेपेण लेखवाहकः )

लेखवाहकः—हा अय्ये धूदले तुए विणा इध अज्ज एव्व लाअउले पलिभवीआमि। ( राज्ञः पुरः ) हा अय्य धूदले कहिं दाणिं सि, (२) ( इत्यात्मानं ताडयन् पतति )

कञ्चुकी—किमत्र करोमि।

( इति निष्क्रान्तः )

---

(१) एवमिदं। तथापि स्वयमेव पर्यवस्थापयात्मानम्। को भवन्तं परिबोधयितुं पारयति।

(२) हा आर्ये दुहितः त्वया विना अत्र अद्यैव राजकुले परिभूये। हा आर्ये दुहितः कुत्रेदानीमसि।

रुमण्वान्—( दृष्ट्वा स्वगतं ) हा धिक्कष्टं प्रविष्ट एव ।

विदूषकः—(अपवार्य) आः दासीए पुत्त देव्वहदअ एव्वं विधस्स अत्तभवदो ईदिसाइं दुक्खसलाइं संचालअन्तो अग्गिं परितो पलालभारअं परिणिक्खिवसि । (१)

रुमण्वान्—भद्र समाश्वसिहि समाश्वसिहि ।

लेखवाहकः—(सहसोत्थाय) हा स्वामिनि, हा परिजनवत्सले, हा प्रद्योतजीवितसर्वस्वभूते, हा सौम्यदर्शने, कुत्रेदानीं स्वामिनं विरहाय गतासि । किमिति साम्प्रतमितो गत्वा देव्या अङ्गारवत्या देवस्य वा महासेनस्य निवेदयिष्ये ? (ष्यामि)

राजा—भद्र त्वरितक निवेद्यतां देवदेवाय ;

या निर्दयेनोदयनेन देवी
त्वत्तः खलेनापहृता छलेन ।
तस्यापि सा मूढमतेः प्रसह्य
दैवेन सम्प्रत्यपहृत्य नीता ॥१७

रुमण्वान्—भद्र गच्छ, किं दुःखितमपि भूयो भूयो दुःखयसि देवम् ।

लेखवाहकः—शोभनंभणत्यमात्यः । दुहिना उपलब्धैव ? किमेतस्य दुःखविभ्रमपरवतशवि (२) राजेन्द्रस्यात्याहितं करोषि ? ( मि ) भवतु गमिष्ये ? ( ष्यामि ) ।

( इति निरुत्साहं परिक्रम्य निष्क्रान्तः )

राजा—आर्य रुमण्वन् यौगन्धरायणं द्रष्टुमिच्छामि ।

रुमण्वान्—स खलु महात्मा देवीमेवाभ्युपपद्यमानः ।

( इत्यर्धोक्ते सबाष्पमधोमुखस्तिष्ठति )

राजा—( सविशेषावेगं ) किमसावप्यस्मान्परित्यज्य गतः ।

रुमण्वान्—अथ किम् ।

राजा—हा सखे यौगन्धरायण । त्वमपि मामपुण्य ? निर्गुण इति संभाव्य देवीमेवानुगतः । ( इति मूर्च्छितः पतति )

विदूषकः—समाश्वसतु समाश्वसतु भवान् ।

राजा—( समाश्वस्य ) हा ? सखे यौगन्धरायण ।

---

( १ ) आः दास्याः पुत्र दैवहतक एवं विधस्य अत्र भवतः ईदृशानि दुःखशतानि सञ्चारयन् अग्निं परितः पलालभारं परिनिक्षिपसि । ( २ ) परवशस्यापि ।

रागान्धे मयि कस्य माद्यति मनः खेदस्समुत्पद्यते
कस्मिन्राज्यभरं निवेश्य सकलं सेवे सुखानीच्छया ।
दुर्वृत्तारिवरूथिनीप्रमथनः कः स्यान्ममाग्रेसरः
कामाशामवलम्ब्य सम्प्रति गते दूरं त्वयि प्राणिमि ॥१८

अथवा—

पोतः साक्षात्त्वं विपद्वारिराशौ
तत्ते शौर्यं नात्तपूर्वं मृगेन्द्रैः ।
क्रीडालापास्त्वत्त एव प्रसूताः
किं कं स्मृत्वा रोदोमि त्वद्गुणानाम् ॥१९

विदूषकः—( रुदन् ) हा अमच्च अम्हे परिच्चइअ देवीमणुगच्छन्तो दुक्करं अज्झवसिदोसि। ( १ )

राजा—वयस्य, मामैवम् ।

सा सुदूरमितो याता सर्व एव वयं स्थिताः ।
स चेन्नेता न तस्यास्स्याद्भवेद्देवी ततः कथम् ॥२०

वयस्य जाने सांकृत्यायन्या काञ्चनमालया स्वस्नेहानुरूपमनुवृत्तमेव देव्याः ।

विदूषकः—भो अविरहिदओ एव्व ताओ देवीए। ( २ )

राजा—( विदूषकमुद्दिश्य ) तत्किमनेन वृथा प्रलापव्यतिकरेण ।

उत्तिष्ठ तत्र गच्छामो ? यत्रासौ सचिवो यतः ।
सा च देवी विना ताभ्यां जातं शून्यमिदं जगत् ॥२१

विदूषकः—( रुमण्वन्तं प्रति जनान्तिकं ) अमच्च को विअ सम्पदं एत्थ उवाओ। (३)

रुमण्वान्—( जनान्तिकं ) धीरो भव: प्रतिविहितमेवैतत् ।

विदूषकः—( अपवार्य ) अमच्चो जाणादि। ( ४ )

---

( १ ) हा अमात्य अस्मान् परित्यज्य देवीमनुगच्छन् दुष्करमध्यवसितोसि।

( २ ) भोः अविरहिते एव ते देव्या। ( ३ ) अमात्य क इव सांप्रन्तं अत्र उपायः।

( ४ ) अमात्यो जानाति।

रुमण्वन्—( प्रकाशं ) यद्येवमपि व्यवसितं तत्प्रयागतपोवनं गन्तुं तथापि युक्तं तत्र पुण्यदर्शनान् सिद्धतपसो दृष्ट्वा यथायुक्तं करिष्यति देवः।

राजा—( स्वागतं ) नाहमनयोः सकाशात्समीहितमध्यवसातुमासादयामि, भवत्वेवं तावत्। (प्रकाशं) आर्य रुमण्वन्, सखे वसन्तक, स्थान एवाहं निवारितो भवद्भ्यां, यतोऽहमपि नैनं कृतघ्नं स्त्रीघातपातकिनं पावकं द्रष्टुमत्युत्सहे, किं पुनरुपगन्तुं, तत्साधूक्तं सुहृदा।

सख्यं गता यमुनया सह यत्र गङ्गा
यत्राप्नुवन्ति मुनयः स्वसमीहितानि।
पापीयसां भवति यत्र परा विशुद्धि
स्तं मामितो नयतमिष्टफलं प्रयागम्॥ २२

( रुमण्वद्वसन्तकावन्योन्यं दृष्ट्वा सहर्षमिव. )

रुमण्वान्—( जानान्तिकं ) आर्य वसन्तक अशुभस्य कालहरणं मुहूर्त्तमपि वहु मन्यन्ते नयवेदिनः। परिपालितं चैतदेवमेव, यत्प्रयाग एव रक्तपठच्छन्ना लामकायनो माणवकश्चेति। एवं विधानां हि विषमदशावृत्तानां सैव भूमिर्निर्वृतये। ( प्रकाशं ) युक्तमाह देवः।

विदूषकः—भो सोहणं तुए ववसिदं, तहिं एव्व गच्छम्ह, एदु एदु भवं, ( परिक्रामन् ) पुरोवलोक्य ) हा हा कधं दड्ढाणं एव्व देवीसहत्थसंवड्ढिदाणं तरुपोदकाणं मज्झेण पत्थिदो वि (?) पिअवअस्सो। ( १ )

राजा—( पुरोवलोक्य सकरुणं ) हा देवि वासवदत्ते पादपैरप्यनुगतासि।

कुरवकतरुर्गाढाश्लेषं मुखासवलालनं
वकुलविटपी रक्ताशोकस्तथा चरणाहतिम्।
तव सुकृतिनः संभाव्यैते प्रसादमहोत्सवा
ननुगतदशाः सर्वे सर्वेश्शठो न वयं यथा॥ २३

( १ ) भोः शोभनं त्वया व्यवसितम्। तत्रैव गच्छामः, एतु एतु भवान्—हा हा कथं दग्धानामेव देवीस्वहस्तसंवर्धितानां तरुपोतकानां मध्येन प्रस्थितोपि प्रियवयस्यः।

तत्किमनेन ।

दृष्टाः श्रुताश्च (जगति ?) प्रायो नारीभिरनुगताः पुरुषाः ।
तामनुगच्छन्कान्तां करोमि विपरीतमनुसरणम् ॥ २४

विदूषकः—( जनान्तिकं ) अमच्च पत्थिदो ऐसो पआगं, ता तुवं पि दाव णीअतु । अण्णधा इदं सव्वं एव्व पय्याउलं भोदि । ( १ )

रुमण्वान्—( जनान्तिकं ) लामकायने प्रयागे सिद्धिमुपागते त्वयि चांगीकृतभरे परतो निर्वर्तिष्येऽहं प्रस्तुतसिद्धये ।

( इति निष्क्रान्ताः सर्वे )

## द्वितीयोऽङ्कः समाप्तः



( १ ) अमात्य प्रस्थित एष प्रयागम् । तत् त्वमपि तावन्नय, अन्यथा इदं सर्वं पर्याकुलं भवति ।

श्रीः

# तापसवत्सराजचरितम्

## तृतीयोऽङ्कः

( ततः प्रविशति रक्तपटच्छन्नो लामकायनः )

लामकायनः—अहो साधु सुदूरमनुसृतममात्यनीत्या, तथाहि मया—

**कथंचिद्वत्सराजोऽसौ मरणाध्यवसायतः ।**
**आशाप्रदर्शनोपायैः परिबोध्य निवर्तितः ॥ १**

अस्मदुपदेशादेव प्रतिपन्नतापसव्रते राजगृहं प्रस्थिते वत्सराजे पूर्वपुरुषोचितमार्गव्यतिक्रमकारिणा त्वया सहैकत्र तीर्थयात्रामपि न निर्वर्तयामीति प्रयाण ? (प्रणय) कोपमिव कृत्वा रुमण्वानपि यथासमीहितसिद्धये प्रतिनिवृत्य समुद्युक्तः । प्रेषितश्च मया यथावृत्तं सन्दिश्यामात्ययौगन्धरायणसमीपं तद्वृत्तान्तं चोपलब्धुं माणवक श्चिरयतीति, ( सवितर्ककरुणं ) अथवा ।

**मन्त्रिवृषभैर्विरचितो देवी दग्धेति यः प्रवादोऽयम् ।**
**प्रियविरहजेन शिखिना किं नु कृतः सत्य एवासौ ॥ २**

( ततः प्रविशति परिश्रान्तस्तथाविधः शिष्यः )

शिष्यः—( शिरः परामृश्य सनिर्वेदं ) ( १ ) दृढं विडम्बितोऽस्मि अमात्यसेवया, मया ज्ञातं अहमेतस्य प्रधानामात्यस्यानुगतो भूत्वा एतया कुलक्रमागतया चक्रचारविद्ययात्मानं शोभयित्वा महार्घदुकूलानि वसानः गुडदधिपूरितोदरश्चन्दनचर्चिताखण्डमोदकसुगन्धिजीर्णोद्गारोऽन्तः ? प्रातिवेशिवध्वा उअहसिअ रच्छामुखेषु यथेच्छं सपरिभ्रमिषं ? यावत्त्वमीदृशः त्वं

---

( १ ) अत्र प्राकृतस्थाने संस्कृतमेवास्ति मध्ये द्वित्राणि प्राकृतपदानि अन्ते तु प्राकृतम् । एष लेखकवैधेयस्य प्रमादः ।

तादृशः हृदयनिर्विशेषः खर्वसंपत्स्थान इति पृष्ट्वा पृष्ट्वा देशान्तराद्देशान्तरं परिभ्रमामीति। (आत्मानमाकारयन्) एवं चावस्थान्तरं प्रापितोऽस्मि। तद्यावत्तस्य दास्याः पुत्रकस्य कपटमात्रमुण्डितस्य लामकायनवटुकस्य अमात्यवृत्तान्तनिवेदित ? प्रक्षिप्तगुरुकभारोऽपि अध्यस्य गोर्णीं यथेच्छं ककुद्मान्भविष्ये। विश्राम्यतु साम्प्रतं समग्रदुःखानां जननी भगवती सेवा। (परिक्रम्यावलोक्य च) एसो सो लामकाअणो किंपि किंपि चिन्तअन्तो चिट्ठदि, जाव णं उपसप्पामि, (उपसृत्य) अय्य वन्दामि (१)

लामकायनः—अपि कुशलं देव्या अमात्यस्य च।

माणवकः—कुशलं देवीए अमच्चस्स रण्णो अ। (२)

लामकायनः—कच्चिद्देवः परागतः।

माणवकः—अध इं। (३)

लामकायनः—साधु विहितं। (सपरितोषं) तेन हि राजगृहवृत्तान्तं विस्तरतः श्रोतुमिच्छामि।

माणवकः—शृण्वे ? (णु इ) दं प्रथममेवामात्यप्रेषितया तया प्रव्राजिकया आर्य सांकृत्यायन्या चित्रफलकारोपितराजप्रतिकृतिं दर्शतित्वा बहुप्रकारं च तस्य गुणान्प्रशस्य पद्मावती तथानुरागपरवशा गता यथा परिशिष्य गृहवासमपहाय स्त्रीजनसुलभां च लज्जां "उपरतजायानिमित्तं गृहीतप्रव्राज्यं कस्माद्वत्सराजमभिलषसी ति" पुनरुक्तनिवारितापि जनन्या भवतु या तस्य राज्ञो गतिः सा ममेति भणित्वा गृहीतप्रव्रज्या आश्रमपदे गत्वा तस्य राज्ञः प्रतिकृतिं देवगृहे निवेश्य देवमिवानन्यव्यापारा आराधयन्ती तिष्ठति।

लामकायनः—साधु शोभनमुपक्रान्तममात्यैः अथामात्यः क्व।

माणवकः—अमात्योऽपि केनापि व्यपदेशेन पद्मावत्यां देवीं समर्पयितुं गतः। आगच्छता मया तदेव आश्रमपदमनुसरन्राजा दृष्टः। तर्कयामि वसन्तकेन तं प्रदेशं नीत इति (श्रुतम् ?)

लामकायनः—श्रुतम्।

---

(१) एष लामकायनः किमपि किमपि चिंतयन् तिष्ठति, यावत् एनमुपसर्पामि। आर्य वन्दे।

(२) कुशलं देव्या अमात्यस्य राज्ञश्च। (३) अथकम्।

माणवकः—तत्साम्प्रतं इदानीमेतद्देतावत्ते प्रथमं चंडालचिह्नं खिक्खिरअं ? एषापि अरा ? नुक्कतकच्चवमुण्डितकुण्डिका, एषापि किंशोणिमा, किं पोणिअत्ति एतेषां त्वमेव शिक्षितो नाम जानासि। एतदपि तावत्ते णिप्पच्छिमं संकच्छिआसहितं ? चीवरं। निर्विण्णोऽस्मि, न मम त्वया न चामात्येन च प्रयोजनम्।

( इति क्रोधनाठितकेन सर्वं क्षिप्त्वा गन्तुमिच्छति )

कामकायनः—(बलादाकृष्य विहस्य) मूढ किमिवात्र ते क्षुण्णं।

पूर्वाह्णे कृतभोजनव्यतिकरान्नित्यैव नीरोगता
कण्डूतिस्त्वकचादपैति शिरसः स्नानं यदा रोचते।
जात्याचारकच(द)र्थनाविरहितं ब्राह्मण्यमात्मेच्छया
धूर्तैः सत्वहिताय कैरपि कृतं साधुव्रतं सौगतम् ॥ ३

तदेह्यमात्यविहितमनन्तरकरणीयं सम्पादयावः।

( इति निष्क्रान्तौ )

## विष्कम्भकः

-*—

( ततः प्रविशति चेटी )

चेटी—प्रेषितास्मि भर्तृदारिकया कुसुमान्यपचेणितुं ?। अवचिन्वन्त्या मे कोसलिकया निवेदितं। यथा-सांप्रतमेव केनापि ब्राह्मणेन भर्तृदारिकाया प्रवसितभर्तृका ब्राह्मणी समर्पिता। तद्यदि तां न प्रेक्षसि? (से) ततः किमिमाभिस्ते इच्छाभिः, एतच्च श्रुत्वा असमर्था कुसुमावचय एव ब्राह्मणीदर्शनकुतूहलेनाक्षिप्तनियता अस्मि ?। तद्यावत्तत्रैव गच्छामि। (परिक्रम्यावलोक्य च) अहो एषा भर्तृदारिका, एषा च सा ब्राह्मणी। ( सविस्मयं ) कथमगृहीतप्रव्राज्या भर्तृदारिकैवेषा, तदिह रिक्तता ?। एव यथेच्छं प्रेक्षिष्ये।

( ततः प्रविशति योगोचितवेषा वासवदत्ता गृहीतव्रता च पद्मावती )

वासवदत्ता—( आत्मगतं ) हा धिगिह तावन्मां मन्दभागिनीं निक्षिप्य गतोऽमात्यः। मयाप्यार्यपुत्रकल्याणदत्तहृदयया यदा व्यवसितमेतत्। एवमपि दुःखितया.

निर्वाहितमेव। आर्यपुत्रस्य पुनः न जाने किं वर्तते। ( इति रोदिति ) (१)

पद्मावती—( सास्रं ) पिअसहि धीरा होहि, अवस्सं दे बाधा कदत्थेण भत्तुणा सह समागमं करिस्सदित्ति। ( २ )

वासवदत्ता—( दृष्ट्वा अपवार्य ) एषा कथं महानुभावा मां दुःखितां प्रेक्ष्य बाष्पपर्याकुलमुखी संवृत्ता। भवतु न रोदिष्ये ? ( प्रकाशं ) सखि इदानीं मया पुंसितानि लोचनानि न ते दुःखमुत्पादयिष्ये।

पद्मावती—(आत्मागतमूर्ध्वमवलोक्य) अये दुःखितैवाहं। त्वयापुनरद्याधिकदुःखिता क्रियते ? ( ये )।

चेटी—चिरं पेक्खंतीए ण तिप्पंति मे लोअणाइ। भोदु उवसप्पिस्सं, ( उपसृत्य ) भट्टिदारिए अवचिदाइं कुसुमाइं। ( ३ )

पद्मावती—गच्छ देवागारे समर्पय।

चेटी—जं भट्टिदारिआ आणवेदि। ( ४ ) ( इति निष्क्रान्ता )

वासवदत्ता—(पद्मावतीं दृष्ट्वा सखेदमात्मगतं) वयोविरुद्धं व्यवसितं किमिदानीमस्याः निर्वेदकारणं, पृच्छामि तावत्। ( प्रकाशं ) सखि न तावन्मे तादृशः प्रणयः, प्रष्टुमिच्छामि, किं भणति ? प्रियसखी।

पद्मावती—( लज्जावनता ) पुच्छदु पिअसही। ( ५ )

वासवदत्ता—ईदृश्या रूपयौवनसम्पत्त्या ईदृशस्य च विभवविस्तारस्य (जठा निर्दिश्य) किमिवैतत्।

पद्मावती—( निश्वस्य ) किं तव एदिणा जाणिदेण, अवस्सं एदं पिअसहीए दुक्खं उप्पादेदि। ( ६ )

वासवदत्ता—प्रियसखीति भणसि, न च दुःखसंविभागं करोषीति युज्यत एतत्।

पद्मावती—( निश्वस्य ) प्रियसखि यद्येष ते निर्बन्धः तच्छृणव ?। प्रियसखि अथ जानासि उदअनो नाम वत्सराजा ( जः )।

---

( १ ) प्राकृतस्याने च्छामार्गं मातृकायाम् दृश्यते।

( २ ) प्रियसखि धीरा भव। अवश्यं तव भ्राता कृतार्थेन भर्त्रा सह समागमं करिष्यति इति। ( ३ ) चिरं प्रेक्ष्यमाणायाः मम न तृप्यतो मम लोचने। भवतु उपसर्पामि। भर्तृदारिके अपचितानि कुसुमानि।

( ४ ) यद्भर्तृदारिका आज्ञापयति। ( ५ ) पृच्छतु प्रियसखी।

( ६ ) किं तव एतेन ज्ञातेन, अवश्यमेतत् प्रियसख्या दुःख मुत्पादयति।

वासवदत्ता—( सचकितमपवार्य ) किं तस्स, ( प्रकाशं ) सुणीअदि उदअणो णाम राजा। ( १ )

पद्मावती—( सास्रं निश्वस्य सलज्जा ) किं बहुना तस्मिन् गुणानुरागदुर्ललितेन नि:क्षिप्तास्म्येतेन हृदयेन।

वासवदत्ता—( बाष्पमुत्सृजन्ती आत्मगतं ) अम्हो सिलाहणीओ से अहिणिवेसो, ( प्रकाशं ) केण उण दोसेण दे मणोरधा विसंवादिदा। ( २ )

पद्मावती—( सविशेषकरुणं निश्वस्य ऊर्ध्वमवलोक्य ) ण देव्वेण। ( ३ )

वासवदत्ता—( सास्रं ) कधं विअ। ( ४ )

पद्मावती—तस्य खलु जाया वासवदत्ता नाम जीविततोऽपि बहुमता मृगयां गतस्य दावाणलेन लावणके दग्धा। ततः सोऽपि तस्मिन्नेव हुतवहे ( इत्यर्धोक्ते दुःखावेगं नाटयति )

वासवदत्ता—( कृतमरणनिश्चया सावष्टम्भं ) कहेदु पिअसही। ( ५ )

पद्मावती—( कथमप्यात्मानं संस्तभ्य ) तस्मिन्नेव हुतवहे अलब्धमरणव्यवसायः अमात्यैः परिबोध्यमानः किं मम साम्प्रतं गृहवासेनेति सर्वं परित्यज्य तापसः संवृत्तः।

वासवदत्ता—(सोच्छ्वासमात्मगतं सपरितोषं) दिट्ठिआ धरदि अय्यउत्तो। (प्रकाशं) सहि एव्वं णिवेदअन्तीए अधिअं रोदाविदम्हि पिअसहीए। ता भोदु संपदं सेसं भणिदं एव्व। एत्तिकं ? उण पुच्छामि। किं तुए ( सो ) दिट्ठो राआ। ( ६ )

पद्मावती—प्रियसखि दृष्टः।

वासवदत्ता—कधं विअ ( ७ )

पद्मावती—एहि प्रियसखीमपि दर्शयामि।

वासवदत्ता—( सविशेषभ्रमं ) कहं हि कहं। ( ८ )

---

( १ ) किं तस्य, श्रूयते उदयनो नाम राजा।

( २ ) अहो श्लाघनीयः अस्याः अभिनिवेशः केन पुनः दोषेण तव मनोरथाः विसंवादिताः। ( ३ ) न दैवेन ( ४ ) कथमिव। ( ५ ) कथयतु प्रियसखी।

( ६ ) दिष्ट्या ध्रियते आर्यपुत्रः, सखि एवं निवेदयन्त्या अधिकं रोदितास्मि प्रियसख्या, तद्भवतु सांप्रतं शेषं भणितमेव। एतावत्पुनः पृच्छामि किं त्वया स दृष्टो राजा। ( ७ ) कथमिव। ( ८ ) कथं हि कथं।

पद्मावती—इहैव देवागारे।

वासवदत्ता—( निश्वस्य सकरुणमात्मगतं आकाशे ) हा आर्यपुत्र अथवा स्थाने। तदा अमात्येन विरहिणी कृत्तान्तेन ? मां सम्भावयता परिकलितोऽसि, आर्यपुत्र ! तथा मामारोपितयुक्तं नेदं सदृशं नेदं ?।

पद्मावती—एदु पिअसही। (१)

वासवदत्ता—( स्वागतं ) हद्धि किं एद्ध करिस्सं, ( सविमर्शं ) भोदु एव्वं दाव भणिस्सं, ( प्रकाशं ) पिअसहि णाहं परपुरिसं पेक्खामि। (२)

पद्मावती—पिअसहि णहु दे तं पेक्खंतीए परपुरिसदोसो। (३)

वासवदत्ता—कधं विअ। (४)

पद्मावती—यतश्चित्रगतं देवतारूपं खलु तत्।

वासवदत्ता—( सखेदवितर्कमात्मगतं ) हा धिगेतदप्यमात्यैरेव प्रस्तुतं, तदिद किं करिष्ये। अथवा यथातथावस्थितं चिरस्यार्यपुत्रं प्रेक्षामि ? ( प्रकाशं ) यथा प्रियसख्या रोचते एहि गच्छावः।

( परिक्रामतः )

पद्मावती—( पुरोऽवलोक्य सकौतुकं ) प्रियसखि कुसुमिता एते लतागुच्छकाः, भगवत्याः पूजानिमित्तं किं न कुसुमान्यपचित्य गच्छावः।

वासवदत्ता—(सवितर्कमात्मगतं) किं णाम भअवदीए चित्तफलहवुत्तं तेण अ। एव्वं मे हिअअं कहेदि (५) यथा सांकृत्यायनोह भगवती, तथाप्येवं तावत्। ( प्रकाशं ) किमेतयैव भगवत्या उपनी तश्चित्रफलकः।

पद्मा—अहइं। (६)

वासवदत्ता—( आत्मगतं ) सव्वत्त संकीच्चाअणी एत्त का वा अण्णा ईरिसेसु पओएसु णिउजीअदि। ( प्रकाशं ) पिअसहि एहि कुसुमाइं अवचिणम्ह (७) ( तथा कुरुतः )

---

(१) एतु प्रियसखी। (२) हा धिक् किमत्रकरिष्ये। भवतु एवं तावद्भणामि, प्रियसखि नाहं परपुरुषं पश्यामि।

(३) न खलु तव तं प्रेक्षमाणायाः परपुरुषदोषः। (४) कथमिव।

(५) किं नाम भगवत्या चित्र फलक वृत्तान्तेन च। एवं मम हृदयं कथयति।

(६) अथकिम्। (७) सर्वत्र सांकृत्यायन्येव का वा अन्या ईदृशेषु प्रयोगेषु नियोक्ष्यते ; प्रियसखि कुसुमान्यपचिनुवः।

( ततः प्रविशति सांकृत्यायनी )

सांकृत्यायनी—भो सुष्ठु खल्विदमुच्यते ।

अभ्युद्यतानां श्रेयोऽर्थमपि मूलफलाशिनाम् ।
गृहिभिस्सह साङ्गत्यमन्तरायो विरागिणाम् ॥ ४

यतो मयापि पूर्वोपकारिणो वत्सराजस्य प्रतिष्ठार्थिन्या वर्षरक्षितादेशादेवमनुष्ठीयते, महार्घं च दिव्यभारं व इति वर्षरक्षितः ।

तथा हि—

रिपुपरिभवं शोकं भर्तुः समं मनसा वहन्
कथमिदमिति ध्यानावेगादकालजरां गतः ।
इयमियमितो देवीत्येवं निवृत्य वदन्मुहुः
कथमपि चिरादुत्पश्यन्त्या मयापि विभावितः ॥ ५

प्रत्यासन्नश्चागमनकालो वत्सराजस्य, वत्सा च वासवदत्ता प्रयत्नतस्तद्दर्शनाद्रक्ष्या, सर्वं चैतत्सुकरं प्रतिभाव्यते । दुष्करं ममेदं तु ।

(१) वत्सामपि पश्यन्त्या स्थातव्यं यज्जनेनेव ।
....समयश्चेदानीं (वत्सायाः) पद्मावत्या इहागन्तुम् ॥ ६

यावदहं पूजोपकरणानि सज्जीकरोमि ।

पद्मावती—सखि अपचितानि कुसुमानि, एहि गच्छावः । ( परिक्रम्यावलोक्य च ) इदं देवागारं, एषा भगवती, तदेहि उपसर्पावः ।

सांकृत्यायनी—कथं प्राप्तैव पद्मावती, इयमपि वत्सा मे वासवदत्ता । अहो नु खलु भोः ।

संक्रान्तांगुलिपर्वसूचितकरस्वापा कपोलस्थली
नेत्रे निर्जनमुक्तबाष्पकलुषे निश्वासतान्तोऽधरः ।

---

(१) इयमार्या लेखकदोषात् विकारं नीता । उत्तरार्धे "वत्सायाः" इति पदं प्रमादपतितं स्यात् । अथ तदपनयनेऽपि "समयश्चेदानीं" इति तृतीयपादे मात्राद्वयं न्यूनं । सुधियो विमृशंतु ।

बन्धस्त्रस्तविसंस्थुलालकलता निर्वेदशून्यं मनः
कष्टं दुर्नयवेदिभिः कुसचिवैर्वत्सा दृढं खेद्यते ॥ ७

( संवरणं नाटयति )

पद्मावती—( उपसृत्य ) भअवदि पणमामि। ( १ )

सांकृत्यायनी—अचिरात्सम्पन्नमनोरथा भव।

पद्मावती—( उपविशन्ती वासवदत्तां प्रति ) पिअसहि पणम भअवदिं। ( २ )

वासवदत्ता—( विलोक्य सकरुणमात्मगतं ) कधं भअवदी एव्व, हिअअ ण एत्थिअं एदं, अदो वि अहिअं पेक्खिस्ससि ( ३ ) ( इति ससंवरणं प्रणमति )

सांकृत्यायनी—( संवरणं नाटयन्ती ) वत्से का पुनरियं।

पद्मावती—स्वयमेवैतद्भगवती जानातु, अहं न जानामि, केवलं ब्राह्मणी प्रवसितभर्तृका च, तथा इह भगवत्या वर्तितव्यं, यथा बन्धुजनं स्मरन्ती नोद्विग्ना भवति।

सांकृत्यायनी—चिरमविधवा भवतु, कृतार्थेन भर्त्रा सह सङ्घटताम्, किमुच्यते, त्वत्तोऽप्यधिकेयमस्माकम्।

वासवदत्ता—( सासूयं सकरुणं ) भगवदीए पसादेण सव्वं संपज्जिस्सदित्ति। (४)

पद्मावती—भगवति दर्शय प्रियसख्याश्चित्रफल (ह ?) कम्।

सांकृत्यायनी—(नाट्येन फलकं निरूपयित्वा ) महाविनोदकं वत्से गम्यते दर्शनम्।

पद्मावती—पिअसहि पेक्ख पेक्ख। ( ५ )

वासवदत्ता—(सपरितोषमात्मगतं) कधं अय्यउत्तो। अइ हदहिअअ अलिअमहाणुभावं इत्थअं पेक्खस्सं ? कीस संतप्पंतो ? मं मंदभाइणिं आआसेसि। ( ६ )

---

( १ ) भगवति प्रणमामि। ( २ ) प्रिय सखि प्रणम भगवतीम्।

( ३ ) कथं भगवत्येव, हृदय न एतावदेतत्, अतोऽपि अधिकं प्रेक्षिष्यसे।

( ४ ) भगवत्याः प्रसादेन सर्वं संपत्स्यते, इति। ( ५ ) प्रियसखि पश्य पश्य।

( ६ ) कथमार्यपुत्रः! अइ हदहिअअ, अलिअमहाणुभावं......कस्मात् सन्तप्यमानां मां मन्दभागिनीमायासयसि। इदं वाक्यं भोजदेवकृते शृङ्गारप्रकाशे द्वादशे प्राकृतरीत्यैवानूदितम्—यथा—"वासवदत्ता—(स्वगतमाह) कहं अय्यउत्तो ? अइ हदहिअअ आलिअमहाणुभाव उत्त अचेक्खं सन्तं सिवन्तं ? मन्दभाइणिं आआसेसि" इति, उभयत्राप्यशुद्धिरस्ति।

( इति ससंवरणमास्ते )

पद्मावती—पिअसहि किं भणासि ण लज्जावेदि पिअसहीए(एस मे) जडापरिग्गहो। (१)

वासवदत्ता—कधं ते एसा आकिदी अणणु रूए अहिरमदि। (२)

सांकृत्यायनी—( सखेदमात्मगतं ) अहो धैर्यं वत्सायाः, येनेयं—

दयितं विलोकयन्ती तद्गतमनसोऽपि हस्तगतम(न्यं य)स्याः।
अन्तर्नियमितदुःखा न मनागपि विकृतिमायाति॥ ८

( पुरोऽवलोक्य साकुलमात्मगतं आकाशमवलोक्य ) कथं प्रत्यासीदति मध्याह्नसमयः इयं च वेला वत्सस्य मे वत्सराजस्य पद्मावतीं द्रष्टुमिति स्थितम्। यतोऽहमप्यातिथेयातिदेशेन वासवदत्तामितोऽपनयामि। ( प्रकाशं ) वत्से पद्मावति प्रत्यासन्नो मध्याह्नः। (३)

अध्यारूढपिपीलिकाभरनमच्छ्यामाकपुष्पावली
श्यामा....न्युटजाङ्गणानि हरितैर्होमार्जुनीगोमयैः।
आलिप्याश्रमकन्यकाः प्रणयिभिः पात्रावजग्धं मृग
नैवारं बलिमाकिरन्ति शकुनिश्रेणीभिरायासिताः॥ ९

तत्क्रियतां यथाक्रियमाणं, अहमपि ते सखीं नयामि सुखावसथम्। विनोदयतु भवतीं वत्सराजः।

पद्मावती—एवं करेदु भअवदी। (४)

(१) इदं वाक्यं मातृकायां संस्कृतेनवास्ति, यथा—"प्रियसखि किं भणामि लज्जयति प्रियसखीं एष मे जटापरिग्रहः" इति शृंगारप्रकाशे द्वादशे प्राकृतेनानूदितं। तदनुरोधेन अत्र मूले अक्षराणि निवेशितानि। अस्य वाक्यस्य चोदकं किमपि पूर्वत्र न दृश्यते।

(२) कथं तव एषा आकृतिः अननुरूपे अभिरमते। इदमपि वाक्यं प्राकृतरीत्यैव शृंगारप्रकाशे निरूपितम्।

(३) "अहो धैर्यं वत्सायाः येनेयं" इतीदं वाक्यं "दयितं विलोकयन्ती" इत्यार्या च शृंगारप्रकाशे द्वादशे उदाहृते दृश्येते। प्रत्युत—पद्यस्य द्वितीयपादपाठस्तु एवं—"तद्गतमनसोऽपि हस्तगतमस्याः" इति। (४) एवं करोतु भगवती।

वासवदत्ता—( आत्मगतं ) सोहणं कथं भअवदीए इदो मं अवणअन्तीए। अण्णधा एत्तिअं पि वेलं कधंपि मए अत्था पय्यवत्थापिदो। ( १ )

सांकृत्यायनी—एकाकिनीयमत्रभवती, तत्कथं ( पुरोऽवलोक्य ) इयमागतैव कोसलिका भवतु, साधयामि।

( सांकृत्यायनीवासवदत्ते निष्क्रान्ते )

( ततः प्रविशति पटलहस्ता कोसलिका )

कोसलिका—भट्टिदारिए इह आगदं भट्टिदारिअं सुणिअ देवदापूआणिमित्तं विलेवणादिअं गेह्णिअ आगदम्हि। ( २ )

पद्मावती—सोहणं कधं उवविस। ( ३ )

कोसलिका—( तथाकरोति )

पद्मावती—( बहुस्थितां मदनावस्थां नाटयन्ती ) कोसलिए किं जाणासि ईरिसो एव्व सो राआ आदु णवेत्ति। ( ४ )

चेटी—भट्टिदारिए विसेसदंसणीओत्ति सुणीअदि। ( ५ )

( ततः प्रविशति तापसवेशो ? (षो) राजा परिव्राड् वेशो ?(षो)विदूषकश्च )

राजा—( सास्रं निश्वस्य )

सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते
त्रासोत्कम्पविहस्तया प्रतिपदं देव्या पतन्त्या तदा।
हा नाथेति मुहुः प्रलापपरया दग्धं वराक्या तया
शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्यामहे॥ १०

विदूषकः—( सखेदं सासूयं ) भो वअस्स अज्जवि तं दासीए बुत्तं पलीवणअं सुमरिअ

---

( १ ) शोभनं कृतं भगवत्या इतो मां अपनयन्त्या, अन्यथा एतावतीं वेलां कथमपि मया आत्मा पर्यवस्थापितः।

( २ ) भर्तृदारिके इह आगतां भर्तृदारिकां श्रुत्वा देवतापूजानिमित्तं विलेपनादिकं गृहीत्वा आगतास्मि। ( ३ ) शोभनं कृतं उपविश।

( ४ ) कोसलिके किं जानासि ईदृश एव स राजा ( उत ) न वेति।

( ५ ) भर्तृदारिके विशेषदर्शनीय इति श्रूयते।

अप्पा ( णं ) पलीवेसि। णं ? देवीए सिणेहाणुरूवं कदं एव्व, तए जं कादव्वं।

राजा—अयि मूढ—

वृत्तिर्मूलफलादिभिः क्षितितले शय्या जटाधारणं
वासो वल्कलमीदृशं कृतमिदं सामान्यमन्यैरपि।
संवेगाभिभवे विमूढमनसा यन्नानुयाता प्रिया
तन्मिथ्यापरिबोधितेन न कृतं स्नेहानुरूपं मया॥ ११

विदूषकः—भो मामिच्छ ? प्रतिबोधित इति भणन् ममाधि ? भंगं कुरुषे। त्वमेव यथोपदिष्टं निजपरिविधिं निचस्व ? मोचय मामस्मात्प्रव्रज्यावलम्बात्, दृढमस्मि निर्विण्णोऽस्मात्।

राजा—वयस्य नायं परिहासस्यावसरः, तत्कथय किं करोमि मन्दभाग्यः। (१)

तन्नामैव ममैति जप्यपदकैः क्वाप्यन्यतस्तैर्गतं
नित्यं सा लिखितेव चेतसि सखे ध्येयं विधेयं न तत्।
तद्वाचः श्रुतिमामनन्ति न पुनर्धर्मोपदेशा मुने
यन्मे याति तपस्यतोऽपि हृदये देव्या तदन्वीयते॥ १२

विदूषकः—( आत्मगतं ) अप्रतीकारगुरुकोऽनुदिवसमस्य प्रवर्धते शोकसंभारः, किमिदानीमिह करिष्ये। अथवा दर्शयेऽस्य पद्मावतीम्। येन चित्तविक्षेपो भवति, भवतु, एवं तावत्। ( प्रकाशं ) भो सर्वं तिष्ठतु तावद्दृढमस्मि परिश्रान्तः, तदेतस्मिन्नाश्रमपदे प्रविश्य विश्रमामः ?।

राजा—एवं, यथाह भवान्। ( इति यथोचितं परिक्रामतः )

राजा—( पुरोऽवलोक्य ) वयस्य पश्य पश्य।

किञ्चित्कुञ्चितचञ्चुचुम्बनसुखस्फारीभवल्लोचना
स्वप्रेमोचितचारुचाटुकरणैश्चेतोऽर्पयन्तो मुहुः।

—क्रमक्षरं

(१) वयस्य अद्यापितं दास्याः पुत्रं प्रदीपनकं स्मृत्वा आत्मा (नं) ननु देव्याः स्नेहानुरूपं कृतमेव त्वया यत्कर्तव्यम्।

कूजन्ती विततैकपक्षतिपुटेनालिङ्ग्य लीलालसं
धन्यं कान्तमुपान्तवर्तिनमियं पारावतं चुम्बते (ति) ॥ १३

विदूषकः—भो अलं तावत्पारावत्याः, पृच्छामि तावत्ते किं च ।

राजा—पृच्छ ।

विदूषकः—भो किं तेन तदा भगवता सिद्धेन भणितं भौतिकं वेषं गृह्ण ? (हाण) मा नैष्ठिकमिति, तत्किमिदानीं भेदः ।

राजा—वयस्य भौतिकं कारणवशात्परित्यक्तं न दोषाय, नैष्ठिकं पुनरत्याज्यम् । श्रुत्वा, ? किं च भवान्नैष्ठिकं प्रपन्नः ।

विदूषकः—भो णा हं भोदिअं जाणामि, ण हि णाठिअं, जदा तुमं एदं......परिच्चअसि तदा...जा (उण) एसा दासीए...एदं परिव्वाअअभण्डिअं सदसक्कारं ण इअ त...जेव्व देवीए वासवदत्ताए सहत्थोवणीदमोद...पढ़म कालादो विअ (अब्भुअं) विलसिस्सं । (१)

राजा—(ससंभ्रमोत्सुकं) वयस्य कथमिव ।

विदूषकः--(हस्तमवधूयात्मगतं) किं दाणिं एद्ध करिस्सं अहवा एव्वंदाव(प्रकाशम्) भो वयस्स किं ण सुमरदि भवं, जं भणिदं तेण भअवदा......देवी सरिसा किदीए कणआए पाणिग्गहं......देवी समाअमो दे हविस्सदित्ति । (२)

(१) "भो णाह" इत्यादिवाक्यं भोजदेवकृते शृङ्गारप्रकाशे द्वादशे प्राकृतभाषयैवानूदितं लभ्यते । तत्प्रामाण्यादत्र तथैव निवेशितं, नाटकमातृकायां संस्कृतच्छाया केवलं दृश्यते यथा—भो नाहं भौतिकं जानामि न नैष्ठिकं । यदा त्वमेतत्पारिव्रज्यं परित्यजसि तदा अहमपि । या पुनरेषा दास्याः पुत्री स्वस्वप्रिययाता ? दुहितेव क्षणं स्कन्धान्नावतरति, एतत्परिव्राजभांडकं शतसत्कारं नीत्वा तत्रैव देव्या वासवदत्तया स्वहस्तोपनीतमोदकमश्नन् प्रथमकालतोपि अद्भुतं विल सष्यं ? (सिष्यामि)

(२) 'किमिदानो मिह' इत्यादिवाक्यमपि प्राकृतेनैव शृङ्गार प्रकाशे द्वादशे अनूदितं, तदाधारेण अत्र मूले तथैव निवेशितम् । मातृकायां च्छायामार्ग दृश्यते । तथा—कि मिदानीमिह करिष्ये, अथवा एवं तावत्–भो वयस्य किं
(४) स्मरति भवान्-यत्तेन भगवता सिद्धेन भणितं यथा—देवी सदृश्याः
(५) भर्तृदा॰ पाणिग्रहणं निवर्त्य देवीसमागमस्ते भविष्यतीति । इति ।

राजा—( विश्वस्य ) अनयैव दुराशया इमामीदृशीमवस्थां नीतोऽस्मि ।

विदूषकः—( आत्मगतं ) नूनमेष स माधवीलतागुम्फकसूचितः समुद्देशः, भवत्वेवं तावत्, ( प्रकाशं ) भो एतदग्रतो बहलपत्रस्निग्धरुच्छायमपरिभूतमिव सूर्य-किरणैर्लतामण्डपकं, तत्परिसार्यास्माकमवश्यं कुत्रापि विश्रामो भवति, तदेहि प्रविशावः ।

राजा—एवं, ( परिक्रामतः )

चेटी—( श्रुतिमभिनीय ) भर्तृदारिके अपरिचित इव संलापः श्रूयते ।

पद्मावती—हला निरूपय, न तावत्केनापीह प्रवेष्टव्यम् ।

चेटी—यद्भर्तृदारिका आज्ञापयति । ( उत्तिष्ठति )

राजा—वयस्य प्रविशाग्रतः ।

विदूषकः—( प्रवेष्टुमिच्छति )

चेटी—आर्य स्थितो भव ।

विदूषकः—किन्निमित्तं ।

चेटी—इह भर्तृदारिका पद्मावती गृहीतव्रता देवताराधनं निर्वर्तयन्ती तिष्ठति ।

विदूषकः—भवति, कैषा पद्मावती, कतमं वा दैवतमाराधयति ।

चेटी—( सकरुणं ) आर्य शृणु, एषा खलु मगधराज्ञो ? दर्शकस्य भगिनी प्रथममेव वत्सराजगुणानुरागाक्षिप्तहृदया, कस्मिन्नपि निमित्ते स राजा 'तापसः संवृत्त' इति श्रुत्वा, न मेऽन्येन पाणिग्रहणं निर्वर्तयितव्यमिति, गृहीतप्रव्रज्या तमेव चित्रगतमाराधयति ।

राजा—( आत्मगतं ) कष्टमस्थानाभिनिवेशितमनोरथा अत्रभवती ।

विदूषकः—( राजानमुपसृत्य ) भो सुदं तुए । ( १ )

राजा—वयस्य किमनेन श्रुतेन, यदि न ददाति प्रवेष्टुं अन्यत्र गच्छावः ।

( इति विदूषकमाकृष्य गन्तुमिच्छति )

चेटी—( राजानमवलोक्य सविस्मयात्मगतं ) अहो कृतजटापरिग्रहः स एवैष चित्र-प्रतिकृतिस्थः । तदग्रतो गत्वा पृच्छिष्ये ? ( पृच्छामि ) तावत्क एष......( तथा कृत्वोपसृत्य ) आर्य कुतूहलो मां पृच्छति, क एषः ।

विदूषकः—भवति ( २ ) एष सो राआ उदअणो णाम । ( ३ )

---

( १ ) भवतु श्रुतं त्वया । ( २ ) 'भवति' 'एष सो' इत्यनयोर्मध्ये हे—इत्येकमक्षरं मातृकायामस्ति । ( ३ ) भवति एष स राजा उदयनो नाम ।

चेटी—( जनान्तिकं ) तेन मुहूर्तं महाभागं विधारयत्वार्यः यावद्भर्तृदारिकायै निवेदयामि। ( परिक्रामति )

राजा—वयस्य एहि गच्छावः।

विदूषकः—( आत्मगतं ) भो एवं तावत्करिष्ये ( प्रकाशं ) भो इह प्रवेष्टुं न प्राप्यते, व्रतकेन ? वासमर्थोऽस्मि इतः पदमपि गन्तुं, ( ताए......एव्व (१) मया शिलादलस्स ? मथा समर्पित आत्मा ( इति नाट्येन योगभारकं प्रक्षिप्य सखेदमुत्तानकः पतति )

राजा—विधारितोऽस्मि वैधेयेन ( नाट्येन सखेदमुपविशति )

चेटी—( सहर्षं ) कृत आर्येणानुग्रहः ( विचिन्त्य ) भवतु एवं भणित्वा भर्तृदारिकां निष्क्रामयिष्ये।

राजा—वयस्य उत्तिष्ठ गच्छावः।

विदूषकः—नास्मि समर्थः किं पुनःपुनर्मामायासयसि।

चेटी—( उपसृत्य ) भर्तृदारिके नवपुरुषोऽतिथिरागतः।

पद्मावती—( ससम्भ्रममुत्थाय ) तेण हि अग्घं मे उवणेहि। ( २ )

( चेटी तथा करोति )

( पद्मावती अर्घ्यमादाय राजानमुपसर्पति )

राजा—( सहसावलोक्य सविस्मयं ) अये

संक्रुद्धस्य ललाटलोचनभुवा सप्तार्चिषा धूर्जटे
र्निर्दग्धे मकरध्वजे रतिरसौ किं स्याद्गृहतव्रता।
संवासाद्वनदेवता मुनिवधूवेशप्रवञ्चे मनः
कृत्वेत्थं रमतेऽत्र विग्रहवती किं वा तपश्श्रीरियम्॥ १४

पद्मावती—( दृष्ट्वा सलज्जासाध्वससविस्मयानुरागा जनान्तिकं ) कोसलिए अतिथि त्ति भणसि णं सो एव्व एसो मणोरधाभिलसिदो जणो। ( ३ )

चेटी—( जनान्तिकमेव ) अथ किं, मयाप्येतस्य भर्तृदारिकायाः सवमनुरागव्यवसितं निवेदितमेव।

---

( १ ) अस्मिन् वाक्ये 'मया' इति द्विवारमस्ति। ( २ ) तेन हि अर्घ्यं मम उपनय।
( ३ ) कोसलिके अतिथिरिति भणसि, ननु स एव एषः मनोरथाभिलषितो जनः।

पद्मावती—( सविशेषसाध्वसा ) ता किं विअ एत्थ पडिवज्जिस्सं। ( १ )

चेटी—भर्तृदारिके मुक्तसाध्वसा भूत्वा उपनयास्यार्घ्यम्।

( पद्मावती लज्जां नाटयति )

चेटी—( राजानमुपसृत्य ) प्रतीच्छत्वर्घ्यं महाभागः।

विदूषकः—किं विचारेण, प्रतीच्छतत्।

( राजा अर्घ्यं गृह्णाति )

पद्मावती—( राजानं निर्वर्ण्यात्मगतं ) णं आणिदो, अहिलिहिदु ? संपदं भागधेआ जाणंति ( २ )

विदूषकः—( कृतकसंभ्रमं नाटयन्नपवार्य ) भोः किं भणामि, नूनमेषा गृहीतप्रव्राज्या देवी वासवदत्ता।

राजा—( अपवार्य ) वयस्य यत्सत्यमनेनाकारेण दूरमनुसृतैव देवीति तर्कयामि। ( पुनर्निर्वर्ण्यात्मगतं सविस्मयं ) किमेतत्।

प्रिया तावन्नेयं कथयति मनो मे स्फुटमिदं
तदाकारौत्सुक्यादपथनयनेनान्यविषये।
प्रकारेणानेन प्रियजनमृषा ? क्रान्तमथवा
विधिर्मां क्रीडावान्सुखयति शठो दुःखयति च॥ १५

( इति सास्रमधोमुखस्तिष्ठति )

पद्मावती—( निश्वस्यात्मगतं ) एवमपि मामनुगतां ( न ) च बहुमन्युना ? रोदितुं प्रवृत्तः, सर्वथा न मरणं वर्जयित्वा अन्यन्मे दुःखमपनयति।

विदूषकः—भोदि उपविस। ( ३ )

पद्मावती—( ससंवरणं ) आर्य स्थिता ? मध्याह्ने आह्निकं निर्वर्तयितुं गच्छामि।

( इति प्रस्थिता )

चेटी—( सवितर्कमात्मगतं ) यथैषा उष्णोष्णगुरुकं निश्वस्य इतः प्रस्थिता, तथा तर्कयामि अवश्यमस्मान्कं सविशेषमायासयिष्यतीति।

---

( १ ) ततः किमिवात्र प्रतिपत्स्ये।

( २ ) ननु आनीतः ( अभिलषितः ) सांप्रतं भागधेया जानन्ति।

( ३ ) भवति उपविश।

( यथावस्थोचितं परिक्रम्य निष्क्रान्ते )

विदूषकः—भो वअस्स अत्तभोदीं अणालवंतेण तुए ण सोहणं कदं । (१)

राजा—( सविलक्षं ) वयस्य स्थितो मध्याह्नः किं न पश्यसि ।

तारण्यो धौतमुक्तास्त्वच इह विगलद्वारयो यान्ति शोषं
साम्नां बद्धानुबन्धं ध्वनिरिह तटिनीमध्यभाजां मुनीनाम् ।
आयातात्राघ्र्यमर्घ्यं रटितमिति शुकैराश्रमाभ्यागतानां
पात्रादेवोच्चकण्ठाशिशिखिन इह बलिं तापसीनां हरन्ति ॥ १६

तदेहि वयमपि सवनवेलां निर्वर्तयामः ।

( इति परिक्रामतः )

राजा—वयस्य पश्य पश्य ।

आदौ मानपरिग्रहेण गुरुणा दूरं समारोपितां
पश्चात्तापभरेण तानवकृता नीतां परं लाघवम् ।
उत्सङ्गान्तरवर्तिनीमनुगमात्सम्पिण्डिताङ्गीमिमां
सर्वाङ्गप्रणयां प्रियामिव तरुश्छायां समालम्बते ॥ १७

( पुरोऽवलोक्य ) वयस्य दृश्यताम् ।

सद्यस्स्नातजपत्तपोधनजटाप्रान्तस्रुताः प्रोन्मुखं
पीयन्तेऽम्बुकणाः कुरङ्गशिशुभिस्तृष्णाठ्यथाविक्लवैः ।
एतां प्रेमभरालसां च सहसा शुष्यन्मुखीमाकुलां
श्लिष्टां रक्षति पक्षसम्पुटकृतच्छायां शकुन्तः प्रियाम् ॥ १८

विदूषकः—( आत्मगतं ) यथैव निश्वस्यैवं विधान्यभिनन्दति तथा तर्कयामि अनुशयेनास्य परामृष्टं हृदयम् ।

( इति परिक्रम्य निष्क्रान्तास्सर्वे )

## तृतीयोऽङ्कः समाप्तः

(१) भो वयस्य अत्रभवतीं अनालपता त्वया न शोभनं कृतम् ।

॥ श्रीः ॥

# तापसवत्सराजचरितम्

## चतुर्थोऽङ्कः

( ततः प्रविशति गृहीतसमुचितोपकरणो धार्मिकच्छद्मा अमात्यप्रणिधिः )

अमात्यप्रणिधिः—( सपरितोषं ) नमो भगवताममात्यानाम् ।

(१) शेतालिचिदुन्निलोडिदो जे ण कदाइ कहिं पि खंडिदे ।
जेहिं गलगुड्डिदेइआ विहिगत्तं त लिखित्ति णेइआ ॥ १

प्रेषितोऽस्म्यमात्यैः । यथा हन्त सिद्धार्थक गच्छ जानीहि तावत्कीदृशः सांकृत्यायन्या वृत्तान्तो वर्तते, ( विलोक्य ) एसा अशे अश्श(म)पदे, ( २ ) तद्यावदार्यां सांकृत्यायनीमन्वेषयामि, ( बहुविधं परिक्रम्य )

(३) वुद्धीअलगित्तामूलके शऽववसाअकदालवालके ।
णअपादविदाअपुल्लिदे अइलाबद्धफले हुविष्कदि ॥ २

( सविस्मयं ) अहो ! सुघटितः प्रयोगोऽमात्यानाम् ।

( ४ ) भ्रम्यते पार्श्वे पार्श्वे एभिर्भर्तुः प्रमादशङ्कितैः ।
एविदाशवर्तिगेहहिं देवीमय्यणवादहोष्कदि ॥ ३

---

( १ ) एषा गाथा अविशदा । लेखक दोषात् न केवलमक्षराणां भाषायाश्च विपर्यासः दृश्यते । ( २ ) एतदस्याः आश्रमपदम् ।

( ३ ) इयमपि गाथा अविशदा । च्छाया—बुद्धि...मूलः सद्व्यवसायकृतालवालकः । नयपादप......पुष्पितः अचिरात् बद्धफलो भविष्यति ॥

( ४ ) इयमपि गाथा विपर्यासिता-उत्तरार्धमस्फुटम् ।

( पुरोऽवलोक्य ) एषा सा सर्वकार्यसमुद्गिका सांकृत्यायनी, इतो नातिदूरे चिन्तानिक्षिप्तहृदया तिष्ठति ।

( ततः प्रविशत्युपविष्टा सांकृत्यायनी )

सांकृत्यायनी—( सचिन्ता )

प्रद्योतस्य मया सुता कथमपि स्वैरं समाश्वास्यते
वैमुख्येन नृपस्य दुखःविधुरं पद्मावती प्राणिति ।
तैस्तैर्युक्तिशतैर्वसन्तककृतैराजापि संधार्यते
वार्ता नास्ति रुमण्वतः कथमिति क्लिष्टं मया स्थीयते ॥ ४

प्रणिधिः—( उपसृत्य ) अय्ये पणमामि । (१)

सांकृत्यायनी—( दृष्ट्वा ) अये कथं धार्मिकच्छद्मा सिद्धार्थकः । ( दिशोऽवलोक्य ) भद्र कुशलममात्यस्य ।

प्रणिधिः—सुट्ठु कुसलं । (२)

सांकृत्यायनी—अपि घटितं सार्वत्रिकं तन्त्रं ।

प्रणिधिः—गोपालपालकाधिष्ठिते प्रत्यासन्न ?( न्ने ) महासने ? (सेन) सैन्ये वर्तते ।

सांकृत्यायनी—अपि दर्शकः सम्प्राप्तः ।

प्रणिधिः—सोऽपि तस्मिन्नेव दिवसे अमात्येन सह दर्शनं करोति । अमात्य यौगन्धरायणोपि मयानुपदमेव दृष्टः । निवेदितामात्यसन्देशे च सविशेष-प्रत्यासन्ने पर्यन्ते मिलित्वा तदेव प्रस्थिते कौशाम्ब्यापि अऊजुकलिके उवलोके इत्ति कोकाले, इहात्मानं वर्तति ? इशु इण ! देव्या देवस्य पद्मावत्या अकालोचितो विवाहकाल आर्याया हस्ते वर्तते, अयममात्य-सन्देशः ।

सांकृत्यायनी—साधु स्थपतिपुत्र साधु, त्वयैवं व्यवस्यता ।

सर्वेषां व्यसनानां स्वामिव्यसनं भवत्यतिगरीयः ।
कूटस्थानीयश्च प्रभुरिति हत एष जनवादः । ५

---

(१) आर्ये प्रणमामि । (२) सुष्ठु कुशलम् ।

अपि च।

दूरमुदीर्णे च रिपावेवमकिञ्चित्करे च विजिगीषौ।
भवता तु नयगुणशतैः सोऽयमसूत्रः पटः क्रियते ॥ ६

प्रणिधिः—देदु पडिसंदेशं अय्या। (१)

सांकृत्यायनी—उच्यताममात्यः, इह यथाशक्ति समुद्यतैवास्मि समीहितसिद्धये। कालस्तु न परिहातव्यः।

प्रणिधिः—जं अय्या आणवेदि। (२)

(इति निष्क्रान्तः)

सांकृत्यायनी—एवमपि परिश्रान्तेषु जाग्रत्सु सचिवेषु प्रतिष्ठापितो वत्सराज इति मन्ये। भवतु, वत्सायाः वासवदत्तायाः पद्मावत्याश्च स्वरूपं निरूपयामि।

(इति निष्क्रान्ता)

## प्रवेशकः

(ततः प्रविशत्युपविष्टः सखेदो राजा)

राजा—(निश्वस्य सवितर्कं सासूयं)

सन्तापं न तथा तनोति परुषं बाष्पं क्षिणोतीव मे
बध्नात्येव रतिं क्षणं न तु पुनः स्थैर्यं समालम्बते।
मामस्यां विनियोक्तुमिच्छति मुहुर्देवीमुपेत्यात्मना
कष्टा दैवहतस्य दग्धमनसः काप्यस्य दुर्वृत्तता ॥ ७

(सविस्मयं) अहोनु खलु भोः

मयि मनः प्रणिधाय धृता जटा
(३) न गणितः स्वजनो न च बान्धवः।
अनुगमैरिति मामनुरागिणीं
व्यवसितादपनेतुमिवेच्छति ॥ ८

(१) दिशतु प्रतिसन्देशमार्या। (२) यदार्या आज्ञापयति।
(३) न भवं वयः इति क्वचित्पाठः।

एतत्तु मे मनसि वर्तते

कृत्वातिथ्यनिभं बलात्किल कराकृष्टा ममोपान्तिकं
सख्या तत्समये त्रपानतमुखी कृच्छ्रादिव प्रापिता ।
देवीदुःखभरान्विते मयि तथा मध्यस्थतामागते
प्रत्याख्यातमनोरथा किमपि सा कुर्वीत नात्याहितम् ॥ ६

प्रेषितश्च मया तामेव बोधयितुं वसन्तकश्चिरयति ।

( ततः प्रविशपि त्रिदण्ड हस्तो विदूषकः )

विदूषकः—सुष्ठु खल्वेतद्वर्तते—न भगवती भवितव्यता अतिक्रमितुं पार्यते इति...... देवी परेण चिअ ? उदासीनतामवलम्बितं ? परनिवास दुःखितानुगतं वेषं धारयन्ती दृष्टा, न च तया महानुभावया पुनरुक्तोद्गमन्युसंभारनिरोधन दुःखितयापि मां प्रेक्ष्य विचारो दर्शितः । केवलं निश्चलया दृष्ट्या चिरं निह्नूय निह्नवगुरुकं निश्वसन्त्या उपालब्ध इव अहं कथमपि विसंवादितमेव युष्माकं युक्तिमिति ? एतच्चातिदुष्करं देव्याः यद्दुःख ? सवत्तिभूदं पि पद्मावतीं समासादयति ? (१) भणिता च मया वयस्यसन्देशं पद्मावती, यथा च सा अदत्तप्रतिवचना लज्जावनतमुखी रोदितुं प्रवृत्ता । तथा तर्कयामि एवं विमानिता दुष्करं जीविष्यतीति ? एतं च वृत्तान्तं प्रियवयस्यस्य निवेदयितुं त्वरमाणः तं जोअभारअं सांकृत्यायन्या निक्षिप्यागतोऽस्मि । सर्वथाऽसाधुजनविक्षिप्तमिव न पुनस्तां प्रेक्षि ? ( विचिन्त्य सप्रत्यशमिव ) प्रियवयस्यस्यापि पद्मावत्याः प्रथा ? संप्रतिबोधयितुं मे पेसअंतस्स ? सोपरोधमिव हृदयं लक्षितमिव । अन्यथा का णिग्गदस्स घरतंतो, किं वा णग्गाक्खवणओ कप्पासावाडिअं रक्खं तो बुझदि । भवतु प्रियवयस्यं तावत्प्रेक्षामि ? (परिक्रम्यावलोक्य च ) तूष्णीमेवोपविशति ( २ )

---

( १ ) सपत्नी भूतां पद्मावतीं समाश्वासयतीति स्यात् ।

( १ ) अत्र सर्वं विदूषक वाक्यं लेखकेन विकारमापितम् । आमूलतः प्राकृत भाषा परित्यक्ता । तथापि मध्ये मध्ये प्राकृतच्छायावन्ति पदानि दृश्यन्ते । तत्र च संस्कृतभागे अक्षराणां विपर्यासः लोपश्च । यथा—"पार्यते इति

राजा—( दृष्ट्वा ) वयस्य, अपि प्रतिपन्नः सन्देशार्थः पद्मावत्या ।

विदूषकः—( सोत्प्रासासूयं ) बाला दर्शनीया च तव कृते बन्धुजनं परित्यज्यानुचितं किल समनुभवन्ती एवं प्रियकारणोपरोधशीलस्य वचनं कथं न प्रतिबुध्यते ।

राजा—तथापि किं त्वयोक्तं किं वा तया ।

विदूषकः—एवं मया भणितं, यथा प्रियवयस्यो भणति, जानाम्ये ( स्ये ) व यथा मया सर्वं परित्यक्तं, तन्निवार्तं तु? त्वमस्माद्व्यवसायात् , किं मामुद्दिश्याकारण मात्मानमायासयसि इति ।

राजा—ततस्ततः ।

विदूषकः—ततः किमपरं, विशेषपरिवृद्धवैमनस्या परिजनतोऽपि दृष्टिमपहाय अञ्जलिच्छादितमुखी विषमोज्जृम्भणोत्कम्पितपयोधरा रोदितुं प्रवृत्ता ।

राजा—( सानुकम्पं ) कष्टं दूरमारोपिता मनसिजेन तपस्विनी ( आकाशे )

कुरु वचो भगवन्मम मन्मथ
व्यवसिताद्विनिवर्तय तामितः ।
इति न चेद्व्रतभङ्गविडम्बना
परिग ? (णा) तिं मम कर्तुमिहेच्छसि ॥ १०

तदसमीक्ष्यकारिणं त्वामेवं तावत्पृच्छामि

तां पश्यामि करोषि बाष्पपिहितं किं मे क्षणं नेत्रयोः
तामेवेदमुपैतु वारय मनो देवीसकाशं गतम् ।
किं वक्ष्ये वद यत्नवानसि वचस्तन्नामनिष्ठं यदा
पुष्पेषो विरम प्रयाति घटनां नैतत्तत्र प्रस्तुतम् ॥ ११

······दवी"—"परेण विअ" "यद्धःकख सवत्ति भूदं वि" "तं जोअभारअं" "न पुनस्तां प्रैक्षि······" "प्रथाः संबोधयितुं पेसिअन्तस्स" इत्यादि । एमपि केषां चित् पदानां छाया—परेणेव, सपत्नीभूतां, तं योगभारं, प्रेषितस्य, का निर्गतस्य गृहचिन्ता । किं वा नग्नक्षपणकः कार्पासवाटिकां रक्षन् पृच्छति ?

विदूषकः—भो चिट्ठदु दाव रूवं, अणवत्तणं अ अत्तणो वि कधं ण णिभंवेसि ? ( १ )

राजा—कथमिव ?

विदूषकः—किं न स्मरति भवान् यत्तेन भगवता सिद्धेन भणिदं, देवी समानां कन्यकां विवाह्यापि प्राप्यते इति ।

राजा—सखे अतएव भीतः ।

अस्याः (पाणि)परिग्रहे सति पुनर्देवी यदि प्राप्यते
दैवादेव तदीरतं यदि सखे सत्यं मुनेः स्याद्वचः ।
तद्वच्ये तदपत्रपं कृतमिदं त्वत्प्राप्तिहेतोर्मया
नैतत्सा हृदये करिष्यति यतो देवी दृढं कोपना ॥ १२

विदूषकः—सम्पद्यतां तावत्ते मनोरथः देवीं पुनः कुपितामहं प्रसादयिष्ये ।

राजा—( विदूषकमालिंग्य ) तत्किं ब्रवीषि, किमिदानीं करोमि ।

विदूषकः—किमन्यदितः लघु गत्वा पद्मावतीं परिस्थापय, अन्यथा सा अवश्यं विपद्यते, एह्येहि लघु गच्छावः, ( इति राजानं बलादुत्थापयन्नात्मगतं ) ही ही भोः यथैष सिद्धिक्षमो मया वि समुत्क्षिप्यते, तथा तर्कयामि सांप्रतं च नूनं ब्राह्मणस्य समर्पित आत्मा ।

( इति परिक्रामतः )

राजा—( परिक्रामन् सकरुणमात्मगतं ) हा देवि ?

चक्षुर्यस्य तवाननादपगतं नाभूत्क्वचिन्निर्वृतं
येनैषा सततं त्वदेकशयनं वक्षस्स्थली कल्पिता ।
येनोक्तासि विना त्वया मम जगच्छून्यं क्षणाज्जायते
सोऽयं दम्भधृतव्रतः प्रियतमे कर्तुं किमप्युद्यतः ॥ १३

( इति सखेदमास्ते )

विदूषकः—( सासूयं ) भो किं पदे पदे पडिबोधीअसि, ता एहि गच्छम्ह, जदो देवीलंभुदअकारणं खु एदं । ( २ )

---

( १ ) भोः तिष्ठतु रूपं ( अनुवर्तनं ) च आत्मनोऽपि कथं न......... । ( २ ) भोः किं पदे पदे प्रतिबोध्यसे, तदेहि गच्छावः, यतः देवीलाभाभ्युदयकारणं खल्विदम् ।

राजा—विदग्धसुहृज्जनसमाश्वासनविनोदमात्रमेवैतत् । अन्यथा अस्ति कश्चित्केन चिदुपायेन परलोकगतः प्राप्यते ।

विदूषकः—( साक्षेपं ) भो मा एव्वं भण, किं उवरदा रुरुमहेसिणा पिअतमा पमद्वरा ण समासादिदा, परसुरामजणणी जमदग्गिणा वा रेणुआ, एव्वं सोआवेअवसीकदो सव्वं एव्व पम्हुससि ( १ )

राजा—( सखेदं ) गच्छ गच्छाग्रतः ।

विदूषकः—एदु एदु भवं । ( २ )

राजा—( सास्रं ) किञ्चित्परिक्रम्य पुनः स्थितः ।

विदूषकः—( परिवृत्य परिवृत्य दृष्ट्वा ) भो वयस्स किं णेदं । ( ३ )

राजा—करोम्येष भवद्वचनं, किन्तु मुहूर्तमस्यां तरुच्छायायामुपविश्य पुनः प्रचलितुं पर्यवस्थापयामि तावदात्मानम् ।

विदूषकः—( स्वगतं ) कथं प्रथमगृहीत इव वनहस्ती वयस्यः दुःखं संचार्यते, भवतु अनुवर्तिष्ये, ( प्रकाशं ) एवं करोतु प्रियवयस्यः ।

राजा—( उपविश्य सकरुणं आकाशे ) हा प्रिये वासवदत्ते ?

कामं दुष्करमेतदेव यदहं त्यक्तस्त्वया जीवित
स्तन्नमास्त्वनुरोधतः प्रणयिनां कोवा स्वतन्त्रो भवेत् ।
किन्तु प्रस्तुतमन्यदेव किमपि स्नेहस्य यन्नोचितं
मत्प्राप्त्यै कृतमेवमित्यपि कथं प्रत्येष्यसीदं प्रिया ?(ये) ॥१४

( ततः प्रविशति वासवदत्तासांकृत्यायनीभ्यां परिबोध्यमाना पद्मावती )

वासवदत्ता—( सबाष्पमात्मगतं ) कथमद्याप्यप्रस्फुटस्नेह एव आर्यपुत्रः केवलममात्यैर्व्यामोह्यते, प्रियसखि समस्सस समस्सस, किमित्यस्मानपि रोदयसि ।

पद्मावती—(सविशेषकरुणं) मां प्रियसखीं प्राप्य किं वा अन्यत्प्रियसख्या भविष्यति ।

सांकृत्यायनी—वत्से पद्मावति ।

---

( १ ) भो मैवं भण, किमुपरता रुरुमहर्षिणा प्रियतमा प्रमद्वरा न समासादिता, परशुरामजननी जमदग्निना वा रेणुका; एवं शोकावेगवशीकृतः सर्वमेव प्रस्मरसि । ( २ ) एतु एतु भवान् । ( ३ ) भो वयस्य किमेतत् ।

सर्वं येन परित्यज्य वनमङ्गीकृतं शुचा
परिबोधनया तस्य किमात्मा खेद्यते त्वया ॥ १५

तत्समाश्वसिहि समाश्वसिहि ।

वासवदत्ता—(आत्मगतं) पद्मावतीं परिबोधयन्ती अधिकं सामाश्वासयति भगवती ।

पद्मावती—(स्वगतं) अतिगुरुकमिदानीं विमाननादुःखं हृदयस्य, न खलु भगवत्याः प्रियसख्या आश्वासनतो यथेप्सितं कर्तुं न ? पारयामि, तत्किं करिष्ये । ( विचिन्त्य ) भवतु यथातथात्मनो धीरत्वं प्रकाश्य केनापि व्यपदेशेन इत एते विसर्जयामि । ( प्रकाशं ) भगवति किमन्यथा संभावयसि, न खलु मे तस्मिन् जने क एतादृशोऽभिनिवेशः ।

वासवदत्ता—( किञ्चिद्विहस्य ) भगवति नास्ति प्रियसख्यास्तस्मिन् जनेऽभिनिवेशः, जटाधारणं पुनः, सोपि सुणिदं ? प्रयासयति ।

सांकृत्यायनी—( स्मित्वा किञ्चिद्बाष्पमात्मगतं ) चिरात्खलु वत्सया सखीप्रतिभेदेन हसितमेव ।

पद्मावती—अयि परिहासशीले भगवतीमपि न प्रेक्षसे ।

वासवदत्ता—( सस्मितं ) अपराद्धं प्रियसख्या ।

पद्मावती—( स्वगतं ) प्रसंगत एवानेन परिहासेन विश्वस्ते इवैते दृश्येते । तत्किमपि साम्प्रतं वदित्वा विसर्जयिष्ये, ( विचिन्त्य ) भवत्वेवं तावत् ( प्रकाशं ) भगवति कुसुमापचयव्यापृतया प्रियसख्या न दृष्टा भो अद्य ? मया निर्वर्तितशोभाः बालवृक्षकालवालकाः, तद्गत्वा दर्शयैतस्याः । अहमपीदानीं तेषामेव शोभाविशेषनिमित्तं शेफालिकाकुसुमान्यपचित्यानुपदमागतैव ।

वासवदत्ता—( जनान्तिकं ) भगवति लज्जालुरेषा अस्मान्प्रेषयित्वा विविक्तमिच्छति । तन्नास्या इच्छाभंगं कर्तुमिच्छामि, तदेहि गच्छावः ।

सांकृत्यायनी—एहि दर्शयामि । ( इत्युत्थाय किञ्चित्परिक्रम्य ) आशङ्कितमिव मे चेतः । एकाकिनी चात्रभवती । कदाचिदत्याहितं व्यवस्येत् । तदितोऽपसृत्य युक्तमेव निरूपयितुं किमियमाचरतीति ।

वासवदत्ता—सोहणं आसंकिदं भअवदीए, मम वि इह सिणेहो अत्थि एव्व । ( १ )

( १ ) शोभनमाशंकितं भगवत्या । ममाप्यत्र स्नेहोऽस्त्येव

सांकृत्यायनी—साधुवत्से साधु। एवं व्याहरन्त्या त्वयैव प्रतिष्ठापितो वत्सराजः।

( इत्यपसृत्य तिष्ठतः )

पद्मावती—( विलोक्य ) गदाओ एदाओ, जाव एदं अवमाणणदुक्खिदं अत्ताणअं परिच्चइअ णिव्वुदा भविस्सं, ता जाव एदएव्व माधवीलदाए समीहिदं णिवत्तेमि। ( नाट्येन लतामालिङ्ग्य सास्रं ) हा ताद हा अज्ज ? (अंब) हा भादुअ ? असुणिअसीलए बद्धसिणेहिअ, तस्सिं अणिदइ जूरमाणिअ, अक्कंदिअअ मुक्ककण्डअं, पेक्खह दुहिदअं, एत्थ, स ? (म) रत्ति ? मं, लहु हिअआणं मातआ ? अण्णपसत्तं जणं महत्तिआणं ? एरिसओ परिणामओ होइ महिलआणं। ( १ )

विदूषकः—( सवितर्कमाकर्ण्य ) भो इदो णादिदूरे रोदीअदि। अदिअं च मे पय्याउलं हिअअं। दिढं उव्विग्गहिअआ तत्तहोदी पद्मावदी मए दिट्ठा, ता उट्ठेहि धीरदाए अवसरो ( इति बलादुत्थापयति ) ( २ )

राजा—तेन हि त्वरितमादेशय।

वासवदत्ता—भअवदि संभावेम्ह पिअसहिं। ( किञ्चिद्गत्वा पुरोऽवलोक्य सास्रं ) भअवदि ओसरम्ह ओसरम्ह।

सांकृत्यायनी—किमर्थम्।

वासवदत्ता—( बाष्पसंभृतमुखी ) किं न प्रेक्षसे, एष आर्यपुत्रो वसन्तकेन बलादानीयते।

सांकृत्यायनी—तेन हि इतो गच्छावः।

वासवदत्ता—( सांकृत्यायन्या हस्तं गृहीत्वा ) भगवति प्रसीद। मुहूर्तकं विचारय, चिरस्य तावत्कालस्यार्यपुत्रं प्रेक्षामि ?। ( ३ )

सांकृत्यायनी—वत्से दुष्करमिदं।

---

(१) गते एते। यावदिदं अवमाननादुःखितं आत्मानं परित्यज्य निर्वृता भविष्यामि। तत् यावत् एतयैव माधवीलतया समीहितं निर्वर्तयामि। हा तात हा आर्य ? ( अंब ) हा भ्रातः......आक्रन्दितमुक्तकण्ठीं ? पश्यत दुहितरं। अत्र...... मां। लघुहृदयानां...अन्यप्रसक्तं जनं...ईदृशः परिणामो भवति महिलानां।

( २ ) भो इतो नातिदूरे रुद्यते। अधिकं च मे पर्याकुलं हृदयं। दृढं उद्विग्नहृदया तत्र भवती पद्मावती मया दृष्टा। तदुत्तिष्ठ धीरतयाः अवसरः।

( ३ ) भगवति संभावयावः प्रियसखीं। भगवति अपसरावः अपसरावः।

वासवदत्ता—णम्हि ईरिसी, वीसत्था होहि । (१)

पद्मावती—( तथैव लतां गृह्णाति )

विदूषकः—( परिक्रम्यावलोक्य च ) भो तुवर, तुवर, एसा खु पदुमावदी एव्व अत्ताणअं वावादेदि । (२)

राजा—( दृष्ट्वा ) कष्टमध्यवसितमेवानया ( विदूषकं प्रति )

द्रुतमिमां विनिवर्तय साहसा
दपनयाशु लतावलयं सखे ।
मम पुनर्दयितां परिरक्षतो
व्रजति दग्धविधिः प्रतिकूलताम् ॥ १६

विदूषकः—भोः न खल्वहमीदृशं साहसं प्रेक्षितुं पारयामि

राजा—(ससम्भ्रममुपसृत्य ) अयि—

विसृज पाशमिमं कुरु मे प्रियं
प्रणयमेकमिमं प्रतिमानय ।
असहने किमिदं क्रियते त्वया
प्रणयवानयमस्मि तवागतः ॥ १७

पद्मावती—( पाशमुत्सृज्य स्वगतं ) अम्हो तेण एव्व णिरणुक्कोसेण अब्बुववण्णम्हि ? ( इति ससाध्वसमधोमुखी तिष्ठति ) (३)

वासदत्ता—( सखेदमात्मगतं ) सोहणं एव्व भणिदं भअवदोए आसि, जधा इहदो गच्छीअदुत्ति ? मए एव्व एदं क...(प्रकाशं) भअवदि अवि पच्चभिजाणासि सो एव्व अय्यउत्तो । (४)

---

(१) नास्मि ईदृशी, विस्रब्धा भव ।

(२) भोः त्वरस्व, त्वरस्व, एषा खलु पद्मावती एव आत्मानं व्यापादयति ।

(३) अहो तेनैव निरनुक्रोशेन अभ्युपपन्नास्मि ।

(४) शोभनमेव भणितं भगवत्या आसीत् । यथा इतः ( इतो गच्छावः इति ) मयैव एतत्...भगवति अपिप्रत्यभिजानासि स एव आर्य पुत्रः ।

सांकृत्यायनी—( ससौष्ठवं ) वत्से

तव वियोगशुचा परिपाण्डुरां
प्रतिपदिन्दुतनुं तनुमुद्वहन् ।
स इति नैष मयापि विभाव्यते
वशितया त्वमिहा ? (वा)द्य च खेद्यसे ? (ते) ॥ १८

वासवदत्ता—भगवति आर्यपुत्रपक्षपातिनीं त्वां मन्त्रयितुं पारयति ( १ )

राजा—अयि राजपुत्रि

विधुरमनसा यत्सन्दिष्टं न तत्र रुषः पदं
कथमनुगतां शक्तः कर्तुं वृथाप्रणयामसौ ।
इति न गणितं मन्ये व्याजर्विसृज्य सखीजनं
कथमपि वयं कोपावेशात्त्वयापि न वञ्चिताः ॥ १९

पद्मावती—( आत्मगतं ) अह्महे थिरसोहिदो एसोत्ति, अदो एव्व मे एदस्स उवरि अहिणिवेसो । ( २ )

वासवदत्ता—( आत्मगतं ) हिदअ समस्सस समस्सस । सुमरदि दे अय्यउत्तो । (३)

( नेपथ्ये )

भो भोः परिचारिकाः किमुदासीनास्तिष्ठथ ।

सांकृत्यायनी—राजपुत्रीति व्याहरन्कञ्चुकी इत एवाभिवर्तते । तदेह्यावसथं गच्छावः ।

( इति निष्क्रान्ते )

( ततः प्रविशति कञ्चुकी )

कञ्चुकी—(सहर्षससम्भ्रममालोक्य) फलितमस्मन्मनोरथैः, दिष्ट्या सम्पन्नमेव,

---

( १ ) का पारयति, अथवा न पारयामि, इति चेत् साधु ।

( २ ) अहो स्थिरसौहृद एष इति, अत एव मे एतस्योपरि अभिनिवेशः ।

( ३ ) हृदय समाश्वस समाश्वस, स्मरति तव आर्यपुत्रः ।

तथाहि—

करतलकलिताक्षमालयोस्समुदितसाध्वसबद्धकम्पयोः ।
कृतरुचिरजटानिवेशयोरपर इवेश्वरयोस्समागमः ॥ २०

विदूषकः—( आत्मगतं ) दिट्ठिआ णम्हि अमच्चाणं उवलंभणीयो संवुत्तो, ( प्रकाशं ) भो वअस्स अवि सुमरदि भवं तादिसाणं कुंतलाणं बह्मणं विअ सीसे चहआणं, ? ( १ )

( राजा सविलक्षस्मितं करोति )

कञ्चुकी—( उपसृत्य ) यदि राजपुत्र्या अमुना तपःक्लेशव्यतिकरेण कृतोपरोधो महाराजः, तन्मङ्गलोचितं यथाविधि संविधीयते किञ्चिदस्माभिः, किमादिशति महाराजः ।

( राजा वसन्तकं पश्यति )

विदूषकः—भो गच्छ किं एदिणा पुच्छिदेण, सज्जीकरेहि मंगलाणं, मा भण अचिंतिदो ? एव्व अस्समपदे देवीविवाहोत्ति । ( २ )

( कञ्चुकी राजानं पश्यति )

राजा—यथाह वसन्तकः ।

कञ्चुकी—देव परोऽनुग्रहः, तदनुजानीहि मङ्गलसम्पत्तये, प्रत्यासन्नश्चायमभ्याहतो विजयो नाम योगः......च जटानां महत्येव वेला भवति ।

... ... ... ... ( ३ )

---

( १ ) दिष्टया नास्मि अमात्यानां उपालंभनीयस्संवृत्तः । भो वयस्य अपि स्मरति भवान्, तादृशानां कुन्तलानां ... इव शीर्षे...... ।

( २ ) भोः गच्छ किमितेन पृष्टेन, सज्जीकुरु मङ्गलानां, मा भण, ? अचिन्तित एव आश्रमपदे देव्या विवाह इति ।

( ३ ) अत्र ग्रन्थ पातोनुमीयते, यथा—भोजदेवकृते श्रृङ्गारप्रकाशे द्वादशे प्रकाशे एवं वाक्यानि उदाहृतानि दृश्यन्ते । यथा—"पद्मावती प्रत्याख्यानदुःखादुद्धृत्यात्मानं व्यापादयन्ती वत्सराजेन निवारिता ह्रिया युक्ता ।
तत्रहि, "विदूषकः—भोदि अअं दाव धोअगुग्गुलु निबद्धओ उण्होदएण जडाओ विच्छोलिअ तादिसो एव्व, अहं उण अणवराहमुंडिदो कुदो तादिसे···मण्ड,......लहिस्सम् । पद्मावती—(लज्जावनतमुखी स्मितं करोति)

राजा—राजपुत्रि गम्यतामिदानीं

( पद्मावती सलज्जा अधोमुखी कञ्चुकिना सह निष्क्रान्ता )

विदूषकः—भो वअस्स अम्हे वि अत्तणो मंगलाइ करेम्ह । ( १ )

राजा—किमत्र कर्त्तव्यं ।

विदूषकः—अहमेक्को कदमङ्गलो, जेण तिदंडं कासाअसेत्तं परिच्चइदव्वं, तुव उण थोवगुग्गुलुकदाओ जडाओ विच्छोलअन्तस्स चित्तेहिं दाव केत्तिआ वेला होदित्ति । ( २ )

राजा—वयस्य बहुपरिहसितं, तदेहि गच्छावः, अस्तावलम्बी भगवान्दिनकरः, तथाहि--

दिशि प्राच्यां भूत्वा प्रथममथमात्मार्पणपरो
विना तस्यास्तापं परुषतरमासाद्य सुचिरम् ।
प्रतीचीमारक्तां द्रुतमनुसरन् सम्प्रति सखे
विवस्वान्मे सर्वं वद यदि विडम्ब्यं न कुरुते ॥ २१

( इति निष्क्रान्ताः सर्वे )

## चतुर्थोऽङ्कः समाप्तः

पुनश्च कञ्चुकिविज्ञापनया अनुज्ञाता राज्ञा, सलज्जा अधोमुखी कञ्चुकिना सह निष्क्रान्ता ।" इति । सुधीभिः विभाव्यताम् ।

( १ ) भो वयस्य आवामपि आत्मनः मङ्गलानि करिष्यावः ।

( २ ) अहमेकः कृतमंगलः, येन त्रिदण्ड' काषाय...परित्यक्तव्यं । तव पुनः, स्तोक गुग्गुलुकृताः जटाः विशोधयतः ...तावत् कियती वेला भवतीति ।

॥ श्रीः ॥

# तापसवत्सराजचरितम्

## पञ्चमोऽङ्कः

( ततः प्रविशतः सविलासं द्विपदीखण्डं गायन्त्यौ चेट्यौ )

चेट्यौ—( बहुविधं नृत्तं कृत्वा ) द्विपदीहिं...... ( १ )

... ... ... ... ( २ )

( वासवदत्ता )......अंगेहिं सुहपसुत्तो चिट्ठदि ( सास्रं ) एदं वि दाव उवालभन्ती किंति अपि बप्फमोक्खं कदुअ पच्छा जधासमीहिदं करइस्सं । ( ३ )

( ततः प्रविशति वसन्तकः )

( वासवदत्ता सरभसमुपेत्य चालयति )

विदूषकः—( निद्रालसं ) कोसलिए कीस मं पडिबोधेसि । ( ४ )

वासवदत्ता—अहो मेधावी अय्यो, एक्कस्सिं सुदं णामं ण पम्हुसदि, अइ उट्ठेहि ( ५ )

( इति भूयश्चालयति )

विदूषकः—आ दासीए सुदे अपेहि, किं पुणो पुणो चालेसि, उण्णिद्दसदकण्णिट्ठो अब्बासिदो ? सम्पत्तसमीहिओ अ चिरस्स दाव सुपिस्से । ( ६ )

वासवदत्ता—( सवाष्पं साभूयं ) अयि हदास उट्ठेहि । ( इति सविशेषं चालयति )

---

( १ ) अत्र ग्रन्थपातः । मातृकायामविभागेन उत्तर ग्रन्थः योजितोऽस्ति )

( २ ) ग्रन्थपातानन्तरं क्वापि प्रारभ्यते ।

( ३ )... अंगैस्सह सुख प्रसुप्तस्तिष्ठति । इदमपि तावत् उपालभमाना किमित्यपि, बाष्पमोक्षं कृत्वा पश्चात् यथासमीहितं करिष्ये ।

( ४ ) कोसलिके कस्मान्मां प्रतिबोधयसि ।

( ५ ) अहो मेधावी आर्यः । एकस्मिन् श्रुतं नाम न प्रस्मरति । अइ उत्तिष्ठ ।

( ६ ) आः दास्याः सुते अपेहि, किं पुनः पुनः चालयसि । उन्निद्र...सम्प्राप्त-संमीहितः च चिरस्य:तावत् स्वपिमि । ( ७ ) अइ हताश उत्तिष्ठ ।

विदूषकः—( सहसा क्रोधनाटितकेन दण्डकाष्ठमुद्यम्योत्तिष्ठन् )

आः—( इति वासवदत्तां दृष्ट्वा तथैव तिष्ठति )

वासवदत्ता— ... ... ... (१)

( राजा ) (२)तथाभूते तस्मिन्मुनिवचसि जातागसि मयि
प्रयत्नान्तर्गूढं रुषमुपगता मे प्रियतमा ।
प्रसीदेति प्रोक्ता न खलु कुपितेत्युक्तिविधुरं
समुद्भिन्ना पीतैर्नयनसलिलैः स्थास्यति पुरः ॥ २२

( सविशेषोत्कण्ठं )

(३) भ्रूभङ्गं रुचिरे ललाटफलके दूरं समारोपयेत्
बाष्पाम्बुप्लुतपीतपत्ररचनां कुर्यात्कपोलस्थलीम् ।
व्यावृत्त्यैव समागते मयि सखीमालोक्य लज्जानता
तिष्ठेत्किं कृतकोपचारकरणैरायासयेन्मां प्रिया ॥ २३

( दृष्ट्वा ) अये वसन्तकः । ( सविस्मयं ) कथं सैवेयमस्य वेशरचना, भवतु प्रतिपालयामि ।

( ततः प्रविशत्युज्ज्वलवेशो ? ( षो ) वसन्तकः )

राजा—( विदूषकस्य शिरः परामृश्य ) वयस्य किमिन्द्रजालमिव ।

विदूषकः—(सपरिहासं) जादं एव्व जाणिदं पुच्छदि, जं अणागदं जाणीअदि, पढमतरं एव्व मए जाणिदं, जधा तुवं अवस्सं एव्व जदा तदा कथ्यमाणुभञ्जन्तो

---

(१) अत्र महान् ग्रन्थपातः ।

(२) बहुग्रन्थपातानन्तरं इदं केवलपद्यमारभ्यते । ध्वनिलोचने तृतीयोद्योते उदाहृते अस्मिन् पद्ये पाठभेदोस्ति । यथा—द्वितीये पादे—"प्रयाणेन्तर्गूढां" इति, तुरीये च पादे "स्थास्यति पुनः" इति च ।

(३) इदं पद्यं, कुन्तककृते वक्रोक्तिजीविते चतुर्थे उन्मेषे धृतं । तत्र पाठभेदः स्खलितं च दृश्यते । उत्तरार्धे यथा—व्यावृत्तेर्विनिबन्धचाटुमहिमामालोक्य लज्जानतां" इति—

पव्वज्जं परिच्चइअ थोअगुग्गुलुकदादिराआओ?जडाओ पक्खालिअ तादिसो एव्व; अहं पुण परमत्थमुण्डिदो अत्थ किं जडाओ लब्भिस्सित्ति चिन्तिअ णडो विअ कदपरिव्वाअवेसो सोअंधिदस्स पुरदो सञ्चरिदो, ण तए जाणिदं एदिसो णिउणओ वसन्तओत्ति। (१)

राजा—( स्मित्वा ) अहो दीर्घदर्शिता ब्राह्मणस्य, अस्माभिस्तु यथाह भवान् न किञ्चिदप्यवगतम्।

विदूषकः—भो वअस्स अविमोहेन ? ......नप्र......ते......प्रभाता रजनी।

राजा—वयस्य किं कथयामि।

देवीस्वीकृ...मान(स)स्य ? निभृतं स्वप्नायमानस्य मे
तद्गोत्रग्रहणादियं सुवदना यायात्कथं न व्यथाम्।
इत्थं यन्त्रणया कथं कथमपि क्षीणा निशा जाग्रतो
दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥२४

विदूषकः—त्वया जानामि दृष्टा न वेति। अहं पुनरद्य सुखप्रसुप्तो देव्या वासवदत्तयैव निबोधितः।

राजा—( ससम्भ्रमोत्सुकं ) वयस्य कथमिव।

विदूषकः—( स्वगतं ) ही ही भोः अतिक्रान्तोऽस्मि, भवत्वेवं तावत्। ( प्रकाशं ) भो वयस्य शृणु, अद्याहं चिरस्य कालस्य लब्धनिद्रः प्रेक्षामि ? विसंगंजस-परिभ्रष्टमलिनलम्बालकमालाप्रसज्जद्बाष्पसलिलां, चिरवियोग क्षामाभिरामां, देवीं त्वां च प्रेक्ष्य बाष्पप्रतिरुद्धकण्ठप्रस्खलत्करुणस्वरं भणितमश्रौषं युष्माकमिति। ततोऽहं तादृशं प्रेक्ष्यादत्तप्रतिवचनो रुदन्नु दन्नेव प्रतिबुद्धः।

( १ ) जातमेव ज्ञातं पृच्छयते, यत् अनागतं ज्ञायते। प्रथमतरमेव मया ज्ञातं, यथा—त्वं अवश्यमेव यदा तदा......प्रव्रज्यां परित्यज्य स्तोकगुग्गुलुकृता... एताः ? जटाः प्रक्ष्याल्य तादृश एव। अहं पुनः परमार्थमुण्डितः अत्र किं जटाः लप्स्ये इति चिन्तयित्वा नट इव कृतपरिव्राजकवेषः ( सैरन्ध्र्याः ? ) पुरः सञ्चरन् न तथा ज्ञातः ईदृशः निपुणः वसन्तक इति।

राजा—( सास्रं ) हा देवि कासि, मे प्रयच्छ प्रतिवचनम् ।

किं प्राणा न मया तवानुगमनं कर्तुं समुत्साहिताः
बद्धाः किं न जटा न वा प्रतितरु भ्रान्तं वने निर्जने ।
त्वत्सम्प्राप्तिविलोभितेन पुनरप्यूढं न पापेन किं
किं कृत्वा कुपिता यदद्य न वचस्त्वं मे ददासि प्रिये ॥२५

( इति रोदिति )

विदूषकः—भो मा रोद, रुदितावसाणं खलु सिविणअं प्रशंसन्ति विचक्षणाः ( १ ) समासन्नं ते कल्याणम् । तदेहि पद्मावतीं प्रेक्षावः ? ।

राजा—( निश्वस्य ) एवं गच्छावः । ( इति परिक्रामतः )

विदूषकः—एषा पद्मावती, तदेहि उपसर्पावः ।

पद्मावती—( दृष्ट्वा ) अहो आर्यपुत्रः, ( सलज्जा ससम्भ्रममुत्थातुमिच्छति )

विदूषकः—भो वयस्य प्रेक्षस्व तावदद्भुताकृतिं तत्रभवतीं पद्मावतीम् ।

राजा—वयस्य पश्यामि ।

मदास्ये न्यस्यन्ती दृशमतनुलज्जापरिकरा
मपि श्लिष्टं (बाष्पं) पतदिव समासज्ज्य कुचयोः ।
करावूर्वोः कृत्वा चलितरसनादाम जघनं
दधानाभ्युत्थाने...... व्यतिकरा ॥ २६

विदूषकः—भो हत्थे गेह्णिअ उववेसेहि अत्थभोदिं । ( २ )

राजा—( नाट्येन तथा कृत्वा विलोक्यात्मगतं )

द्रष्टुं वाञ्छति कौतुकेन नयने अस्या निरुद्धे ह्रिया
किञ्चिद्वक्तुमपि व्यवस्यति न तु प्राप्नोति तत्साध्वसात् ।

( १ ) भो मारुद, रुदितावसानं खलु स्वप्नं प्रशंसन्ति विचक्षणाः ।
( २ ) भोः हस्ते गृहीत्वा उपवेशय तत्रभवतीं ।

आश्लेषेऽस्ति मनोरथो जडतया नूनं समुत्सार्यते
प्रेम प्रेरयतीप्सिते नववधूं भावो निषेद्धा पुनः ॥ २७

( प्रविश्य )

चेटी—भर्तृदारिके कौशाम्बीतो दर्शकेन प्रेषितः कुञ्जरकः ।

राजा—कौशाम्ब्या दर्शकेनेति किमेतदसम्बद्धमिव ।

विदूषकः—न खल्वसम्बद्धं, यदा प्रभृति भवन्तमुद्दिश्य तत्रभवत्या पद्मावत्या जटापरिग्रहः कृतः, तत एव दिवसात्सर्वं परित्यज्य मगधेश्वरो रुमण्वन्मिश्रैः सह सङ्गत्य दुराचारं पाञ्चालहतकमुन्मूलयितुं व्यवसितः ।

राजा—वयस्य किमेतदप्युपक्रान्तं रुमण्वता ।

विदूषकः—भो अन्यथा राजानं तथागतं वयस्यमुज्झित्वान्यत्र अमात्यः प्रतितिष्ठति ।

राजा—एवं युज्यते ।

चेटी—आणवेदु भर्तृदारिका । ( १ )

( पद्मावती राजानं दृष्ट्वा पुनरवनता तिष्ठति )

राजा—भद्रे प्रविशतु ।

चेटी—जं देवो आणवेदि । ( २ ) ( इति निष्क्रान्ता )

( ततः प्रविशत्युज्ज्वलवेषः कुञ्जरकः )

कुञ्जरकः—श्रुतं मया यथा सम्पन्नमनोरथाद्य भर्तृदारिका, अन्यच्च साम्प्रतं न निष्फलः परिश्रमः स्वामिदर्शकस्य । ( नृत्यति, परिक्रम्योपसृत्य च ) जअदु जअदु भट्टा, जअदु जअदु भट्टिदारिआ । ( ३ )

विदूषकः—कुञ्जरअ उपविस । ( ४ ) ( कुञ्जरकस्तथा करोति )

राजा—कुञ्जरक कुशलं राज्ञो दर्शकस्य ।

पद्मावती—( आत्मगतं ) दिट्ठिआ अय्यउत्तेण एव्वं पुच्छिदो । ( ५ )

विदूषकः—किं पृच्छयते, कुञ्जरकस्य मुखराग एव दर्शकस्य कुशलं कथयति, तदेतत्पृच्छ किं तत्र वर्तत इति ।

---

( १ ) आज्ञापयतु भर्तृदारिका—( २ ) यद्देव आज्ञापयति ।

( ३ ) जयतु जयतु भर्ता, जयतु जयतु भर्तृदारिका ।

( ४ ) कुञ्जरक उपविश । ( ५ ) दिष्ट्या आर्यपुत्रेणैव पृष्टः ।

राजा—यद्ये ( वमे ? ) वैतत् कथ्यतां तर्हि वृत्तान्तः ।

कुञ्जरकः—शृणोतु भर्ता अस्तीदानीमस्माकं सेना, रुमण्वदमात्येन सह संप्रधार्य क्रोशमात्रे कौशाम्ब्याः मत्तगजेन्द्रदाननिष्यन्दसविशेषमलिनसलिलायाः कालिन्द्यास्तीरवनलेखामाक्रम्यावसितुं प्रवृत्ता । प्रेक्षामश्च ? खरसंक्षोभ-क्षुभितधीरोत्क्षिप्ततरलायमानतरंगमालावलम्बनधवलकदलिकावर्तपरिव-ट्ठलित ? गगनांगणाभोगं, कड्डुआविद्कण्णकंपंतकादराअण्णि......... खरमुहर......रवसमुच्चलितदिग्विस्तारमुत्तरन्तं परानीकं । ( १ )

पद्मावती—( साकुलं ) हद्धि किं दाणिं एत्थ भविस्सदि । ( २ )

राजा—अहो...दग्धोत्सेकः ततस्ततः ।

कुञ्जरकः—ततो भर्ता अस्माकमपि सम......बहलकोलाहलानन्तरं यथासन्नं गृहीतप्रह-रणं, यथासज्जित......घट्टिततुरंगं, यथा तथा बद्धकवचं, विरलोत्सुकस-श्चलत्पादातपूर्यमाणपुरोभागं, पुनरुक्तसन्नहनासव्यापृतासन्नरुमण्वन्निवारण-निभर्त्सितप्रधावितसेनं, निश्वस्य रोमाञ्चसञ्चयोद्भेदपिशुनितसमररस-प्रसरद्गुरुकप्रहर्षोत्फुल्लसैन्यं ।

विदूषकः—अहो मागधानामसहनत्वं ।

राजा—( विहस्य ) नन्वनपेक्षणीयसाहसैकरस ( सा ? ) वीरा भवन्ति ततस्ततः ।

कुञ्जरकः—तदो प...रोहरिद...प्रहरणरणरणायमानपरशुधाराणिहसणिव्वडिदाणल-जालालुङ्खिज्जंतचिन्धधआदत्तवत्तं पउत्तं असमत्तापरिसपाइक्कविमुक्कहक्का-रवाणुबद्धं जुद्धं ।

पद्मावती—हा धिक् विधृतमिव मे हृदयम् ।

राजा—ततस्ततः ।

कुञ्जरकः—ततः समुखकुन्तप्रहारानुसारोपसरितसूहडपड़िअंतप्रतिभटं, तीक्ष्णखड्ग ? पाणिचलनविह्वलयोधजानुसञ्चारसञ्चितसाहसासादितपरासिधेनुव्यापारण-परितोषितासन्नवीरगोष्ठी ? रभसमिलितप्रतिगजदन्तार्गलावदारितोदर-दलत्स्थूलशृङ्खलावलयमन्दमन्दायमानजातगजेन्द्रं, पुनरुक्तोत्तालनकषा ?

---

( १ ) अत्र कुंजरकवाक्ये मध्ये अन्ते च प्राकृतं दृश्यते, त्रुटिरक्षराणां विपर्या सश्च । क्वचित् क्वचित् छायाविलेखनमपि नोपकारायानुगतं भवतीति जोषमासितम् ।

( २ ) हाधिक् किमिदानीं अत्र भविष्यति ।

(शा) ताडनसविशेषोत्थितसादिपरम्परारब्धनिष्ठुरमुष्टिप्रहारसंमाणिज्जंत-गुरुकरोषानुबंधं, नियोद्धुं प्रवृत्तं अस्माकं प्रहारोब्धरंतपरबलं बलं।

पद्मावती—( सभयोत्कम्पं सास्त्रं च ) कुञ्जरक अपि ध्रियते मे भ्राता।

कुञ्जरकः—( सावष्टंभं ) भर्तृदारिके मा बिभेषि। शृणु विश्वस्ता।

राजा—अलं बलेन आस्त एव स्थपतिपुत्रः।

विदूषकः—भो परतः कथय।

कुञ्जरकः—ततस्तं तादृशं प्रेक्ष्य स्वामिना दर्शकेन उत्तम्भितगुरुकरोषारुणायमानतुङ्ग-ललाटपट्टप्रणयिनी अत्युग्रवीरपताका भ्रुकुटी सज्जीकृता, कुपितकृतान्त-दंष्ट्रादारुणाः प्रहरणविशेषाः।

राजा—उचितमेतदभिमानस्य।

पद्मावती—कधं एक्कं एव्व अज्जावसिदुं पउत्तो। ( १ )

दूषकः—भोदि किं क्षणे क्षणे प्रतिबोध्यसे।

राजा—प्रिये अलमन्यथासम्भावितेन।

जाता च कोपकपिला भ्रुकुटिः कुटिला मुखे।
ततश्च वीरस्य सखा कृपाणप्रणयी भुजः। २७

कुञ्जरक ततस्ततः।

कुञ्जरकः—ततस्तदारम्भं प्रेक्ष्य भणितं रुमण्वदमात्येन—कूमार कुमार......णशभंगो एव्व ? मुहूर्तकं कुमारः प्रतिपालयतु परिस...ली निवेदितं दूरविमुक्त-धावत्पादातं अग्रस्कन्दपस............लतुरंगमपट्ट ? देसदीसंतविविध-चिंढ्ढं पहणाहल्लिद......पलायमाणअपअण्डमाण्डलीबंधं मुखपलितप्रति-गजामोदसदृशप्रधावद्भिरलमत्तमातंगं गोपालपालकाधिष्ठितं महासेनबलं किं न प्रेक्षसे, एष खलु महामुखनिस्सरदुन्नामितफणमहाभुजंगभोगाभोग-दूरोत्थितस्थूलहस्तप्राग्भारः अञ्जनगिरिरिव णलगिरी ( रिः ) दृश्यते।

राजा—( सविस्मयं सास्त्रं च ) कथं गोपालपालकावपि रुमण्वतः साहाय्यं कर्तुं प्रतिपन्नौ। ( अपवार्य ) हा देवि एवमपि निष्करुणमद्यापि न परि-त्यजसि मां।

( १ ) कथमेक एव अध्यवसितुं प्रवृत्तः।

पद्मावती—(सखेदमात्मगतं) गोपालपालकानां ( कयोः ) शंकितं कुर्वतानेन प्रनोदितः आर्यपुत्रः आर्यां वासवदत्ताम् ।

विदूषकः—( राजानं दृष्ट्वा सत्वरं ) कुञ्जरक ततस्ततः ।

कुञ्जरकः—ततः ( इत्यर्धोक्ते स्वगतं ) सशपथं स्वामिनः प्रत्यक्षमेव रुमण्वदमात्येन निवारितोऽस्मि, न त्वया सङ्कथास्वपि अमात्ययौगन्धरायणस्य नाम गृहीव्यमिति । कथमहं तादृशं तस्य पराक्रमं न कथयिष्ये । न ? यस्य प्रभोः परोक्षेऽपि उद्यद्भ्रुकुटीतरङ्गितललाटदृष्टकृतान्तलीलेव वैरिहनने सक्तस्य, ( विचिन्त्य ) भोदु एवं दाव ।

( सर्वे संभ्रमं नाटयन्ति )

विदूषकः—कुञ्जरक तदेति प्रस्तुतवचनः किमस्युत्थितो ? न प्रेक्षसे पर्याकुलतामत्र-भवतः तत्रभवत्याश्च ।

कुञ्जरकः—अय्य कथयामि, विस्मयेन अस्मि आक्षिप्तः ।

राजा—ततस्ततः ।

(कुञ्जरकः) तदा भट्टा प्रेक्षतां प्रेक्षतामेवास्माकं? तदोपहासेन बलान्निष्क्रम्य घनकुटिल-केससण्णिवेसे ? धादु?शैलविशालवक्षस्स्थलो वदन्तपुरोगउरगलप्रतिरूपं ? करकलिदकन्तो, भासुरत्तअं उण्णमिअ गिरिगुहागह्वरोदरभ्रमत्सिंहनाद-गम्भीरभीषणं ओरणिअचटुलणिद्दपार्ष्णिप्रहारतोरविदत्तुरंगमो तेहिं पक्केक-मुब्भरेण बद्धाभिओवदिअउधा ? तेण अदिचिरं आउट्टिदं—

यथा—स्वच्छन्दगच्छच्छोणिततरङ्गिणीतीरान्तरितप्रस्तुततवसारसुद्धुमाइ अगन्तबीभच्छं साणलसिचामुहकलिदकरिकुम्भकुट्टंतुप्फलितमुत्ताफला-लिङ्गदणहविक्कम्भं तक्खवाक्खुडिदसुभडकएठणिरावरणुब्बरत्तापरिमुग्ग-रुग्गाहिदसोणिदुप्पीलरअणक्खम्भविरइज्जन्तकदन्तभअणविब्भमं जादं समरंगणं ।

राजा—हा सखे युगन्धरकुलप्रदीप खण्डमाणवक ! कोऽयं त्वामनुकर्तुमिच्छति ।

विदूषकः—( स्वगतं ) साध्वमात्य यौगन्धरायण कस्त्वां वर्जयित्वा एवमलक्षितं परिक्रामति, स्थाने प्रियवयस्येन परिकलील्यसे ? ।

पद्मावती—( अपवार्य ) धन्यास्यार्ये वासवदत्ते यस्या उपरताया बन्धुजन आर्य-पुत्रमनुवर्तत इति ।

राजा—( सकौतुकोत्साहं ) ततस्ततः ।

कुञ्जरकः—ततः भर्तः अन्योन्यसंघट्टस्फुरत्कुण्ठाघर्घरांकारा उन्नमत्केतुवंशविषमवलना अर्दितत्रुट्यत्प्रत्ययबद्धहस्ता असिलताकृत्तच्छावरक्तावन्तशारिमुखोद्गीर्णमुख-निस्यन्दवन्दीकृतनरेन्द्राः पराङ्मुखावलिता वारणघटाः ।

राजा—अहो पराक्रान्तमावन्तिकैः ।

( विदूषकः ) किं भो भणीअदि, पज्जोदजोधा खु एदे ; (१)

पद्मावती—( स्वगतं ) अहो चिरस्य दृष्टं प्रसन्नमार्यपुत्रस्य मुखं ।

राजा—ततस्ततः ।

कुञ्जरकः—तदो अत्ताणं मज्जो अत्थसेलमिहरसंपच्चपरिस्फुरन्तसञ्जातवोब्बढगंड-ळंच्छणो, रोसारुणलोअणप्पभासिन्दूरसिङ्गारारुणमुहमण्डलो, रभसोक्खत्तं कुसप्पहारसंकुत्ताणिदाणणाभोओ, आधोरणदुक्खप्फालिदकुम्भत्थलो, रभससीमन्तिदसेण्णसण्णिवेसो, णलगिरि उद्दिसिअ मुक्को अगणिदपर-पहरणप्पहारिणिवारणो, कदंतमुहदारुणो, मत्तावारणो अवरो वि तादिसो एव सामिदरसअसणाधं सिलासंघादमाअंगं लक्खीकदुअ पदाविदो ।

पद्मावती—( सभयं ) हद्धि हद्धि...भादरो संसअं...? ।

विदूषकः—अहो दासीपुत्राणां भग्नेऽपि निजबले विनिवृत्य कृतान्तमुखं प्रवेष्टुमभि-निवेशः ।

राजा—भद्र कौ पुनस्तौ वीरजनसाधुवादानामेकायनतां गतौ ।

कुञ्जरकः—शृणोतु भर्ता, सर्वं कहेमि । ततः स्वामिनापि तस्मिन्नवसरे अवमत्य रुमण्वदमात्यवचनं सम्मुखीकृते शिलासंघाते पालकेनापि इलाइरी; ? तदो तेसु दढदन्तावढणविहडंतलोलासिढिलपडिदपडिसं अङ्कुसंकखेक्खेलि-ददुक्खसन्दिदगरुअगन्तं ? निर्दयोद्ग्राहितपरस्परकरच्छेदनदारुणं व्यापा रितजानुयुगमात्रयुद्धेषु वारणेषु पराक्रमानुरूपं परिहरतैव स्वामिना कालजिह्वादलपत्तालं भिण्डिपालमुत्थाप्य निर्भिण्णवक्षस्स्थलो पावितोप्र हस्तिमेलत्रनदुर्विनीतस्साहुक्कारपदवीं वीरलोकस्य पालकेनापि विवर्धि-निष्ठितप्रहरणस्सोऽप्यपरो जीवग्राहं गृहीतः ।

पद्मावती—दिष्ट्या जितं मे भ्रातृभिः ।

विदूषकः—भोः साधितं दर्शकपाल ( कगोपाल ) कैः ।

राजा—( सहर्षं ) परवशा न विद्म एव, किमत्र कुर्मः ।

---

(१) किं भोः भण्यते प्रद्योतयोधाः खल्वेते ।

विदूषकः—कुञ्जरक किमद्याप्यस्ति किमपि परिशेषम्।

कुञ्जरकः—सेसम्हि एक्कदोक्कंदिदमण्डलिज्जंतवेअण्डं अण्णदोप्पप्पन्नकरेणुअं कत्थवित्थकन्तमत्तहत्थिणिडम्बणाआसिदाणुरोहविलुंपन्ते? किञ्चिसमोसरिदपाइक्कं, पुणोवि कोसम्बिं एव्व पविट्टं केत्तिअं पञ्चालसेण्णं। पश्चादस्माभिर्ज्ञातं यथा आरुणिरेवैष: प्रविष्टो नगरीं, ते उण दुएवि तस्स उण अत्ति। तदो अहं सामिणा भट्टिदारिआए उत्तंन्तं जाणिदुं पेसिदो, तेवि अदणिदुआ तक्केमि अण्णस्सिं एव्व दिवसे कोसम्बि गेण्हसदि।

पद्मावती—(स्वगतं) साम्प्रतमार्यपुत्रस्याभ्युदयेन कृतार्थास्मि, (प्रकाशं, आभरणमवतार्य कुञ्जरकाय ददाति) कुञ्जरअ एदं दे पारितोसिअं।

(कुञ्जरकः सप्रणामं गृह्णाति)

विदूषकः—भोस्स्वयमेव जानाम्यहं, यथा न किञ्चिदपि जानामि। तथापि भणिष्ये! समय इदानीमस्माकं कौशाम्बीं गन्तुं, तत्र च गत्वा दुर्गावष्टम्भपरिष्ठितमारुणिहतकं व्यापाद्य दर्शकस्य गोपालपालकयोरमात्यानां च दर्शनसुखेन सफलं परिश्रमं कुर्मः।

राजा—(स्वगतं) एवमुपन्यस्यतो वसन्तकात्परिगतं सिद्धादेशादिभिः प्रयोगैरेव संभूय देवीप्राप्तिदुराशया विप्रलब्धोऽस्मि मन्दभाग्यः। अथवा तो? विना किमनेन व्यतिकरेण, तत्किमिदानीं करोमि, (विचिन्त्य) अथवा एतन्मतमेव तावदनुवर्तमानः प्रयागं तावद्गत्वा तत्रैव देवीस्नेहस्य यथोचितमाचरिष्यामि। (प्रकाशं) वयस्य उपपन्नमेव तावद्भवानाह।

कुञ्जरकः—किं वा भट्टिदारिआ भणदि। (१)

पद्मावती—भणिदं एव्व अय्यउत्तेण। (२)

कुञ्जरकः—जं देवी आणवेदि। (३) (इति निष्क्रान्तः)

विदूषकः—भो तुवर अत्तणो कय्यसिद्धीए। (४)

राजा—(स्वगतं)

**एभिः सतारयद्भिर्नीता मम या न गोचरं दृष्टेः।**
**पश्यामि तामवश्यं कामफलं तीर्थमासाद्य॥ ८**

(इति निष्क्रान्ताः सर्वे)

## पञ्चमोऽङ्कः समाप्तः

---

(१) किं वा भर्तृदारिका भणति। (२) भणितमेव आर्यपुत्रेण।
(३) यद्देवी आज्ञापयति। (४) भोः त्वरस्व आत्मनः कार्यसिद्धये।

श्रीः

# तापसवत्सराजचरितम्

## षष्ठोऽङ्कः

( ततः प्रविशति चेटी )

चेटी—( सकरुणं ) अहो एतावन्मात्रेण मे सुजनो न रोचते, यत्सर्वकालं सुखं दत्वा वियोगे महद्दुःखमुत्पादयति, येन सा भर्तृदारिकायाः प्रियसखी आवासितमात्राणामेवास्माकमावासमागत्य ब्राह्मणेन नीतेति उत्ताम्यन्ताः अपरिजनाया भर्तृदारिकाया रमणीयोऽपि एष पआअ ( प्रयाग ) उपवनोद्देशो न हृदयमानन्दयति । आज्ञतास्मि भर्तृदारिकया, जानीहि तावत, कुत्र सा तेन ब्राह्मणेन नीतेति । न मयान्वेषयन्त्यापि सा आर्या समासादिता, तद्याव द्भर्तृदारिकायै निवेदयामि ।

( इति सखेदं परिक्रम्य निष्क्रान्ता )

### प्रवेशकः

—*—

( ततः प्रविशति कृतमरणनिश्चयां स्नातां वासवदत्तां परिबोधयन्यौगन्धरायणः )

यौगन्धरायणः—देवि प्रसीद ।

आसृष्टैः प्रतिपार्थिवं युवतयो जाता मनोवल्लभा
मग्नास्ते व्यसनार्णवे च बहवस्ताभिः सहैवेश्वराः ।
देव्या यत्तु कृतं तथा विकलतामुत्सृज्य लोकोत्तरं
तस्यैषा कृपणोचितेन विधिना किं ग्लानिरुत्पाद्यते ॥ १

वासवदत्ता—कधं मए अय्यस्स वअणं, ण उण इत्थिआअणसमुइदं ; ता पसीद, जं मए अय्यवअणं ण पडिऊलिदं, तधा अय्यो वि एदं एक्कं वअणं करेन्तो

अणुगेण्हदु मं मन्दभाइणिं। (१) अन्यच्चार्य यस्य कृते तथा मयावमानितो बन्धुजनः, अपहस्तिता कुमारीजनसमुचिता लज्जा, अपक्रमणसाहसं व्यवसितं, आक्रान्ताः शबरशब्दसम्पातदारुणाः कान्तारभूमयः तस्यैव प्रत्यक्षदृष्टव्यलीकविषमं दीर्घं वियोगं विषह्य मुखं दर्शयन्त्याः किमिति मे जनो भणिष्यति।

यौगन्धरायणः—देवि स्तुतेरन्यत् किं वक्ष्यते।

( प्रविश्य सम्भ्रान्ता सांकृत्यायनीशिष्या )

तापसी—( विलोक्य ) कहिं कहिं अमच्चो चिट्ठदि। ( परिक्रम्यावलोक्य च ) कथमेषः, भवतु उपसर्पिष्ये। ( उपसृत्य ) अच्य इदो दाव होहि। ( २ )

यौगन्धरायणः—( ससम्भ्रममुत्थाय ) किमाह भवती।

तापसी—(सकरुणं) भगवती भणति, एष राजा कौशाम्बीमुद्दिश्येमां भूमिमागतः। साम्प्रतं देवीदर्शनदुराशया विप्रलब्धोऽस्म्येतावन्तं कालमिति भणित्वा कृतमरणव्यवसायो न केनापि परिबोधयितुं पार्यते, तत्समय इदानीमस्य देवीमुपनेतुं; अन्यथा अवश्यमेवैष विपत्स्यति। तथा च सर्वमेव तीर्थेषु मज्जनविधिं निर्वर्त्य ब्राह्मणानां चार्थमार्गं प्रतिपाद्य वेणिकाभिमुखं प्रस्थितः।

यौगन्धरायणः—भवति उच्यतां भगवती, सर्वमिदं सुविहितं, केन चिदुपायेन सम्पादनीयश्चायमर्थो वसन्तकस्य, यथा निवारिणीयो वेणिकामनुसरंस्त्वया स्वामी, न केन चिदस्य चिता विरचनीया, परिशेषमहमेव ज्ञास्यामीति।

तापसी—यदमात्य आज्ञापयति।

( इति निष्क्रान्ता )

वासवदत्ता—( स्वगतं ) यथैतैरेवं मन्त्रितं तथा तर्कयामि, आर्यपुत्रस्य मां समर्प्य कालहुई ? कर्तुमिच्छन्ति। भोः त्वरितमेवात्मनः समीहितं करिष्ये। ( प्रकाशं ) अनुमन्यतां मामार्यः।

यौगन्धरायणः—यदि कदाचिदभ्यर्थनां नानुभाव्यते ? देवी तदहमेव तावदपराधी।

( १ ) कथं मम आर्यस्य वचनं, न पुनः स्त्रीजनसमुचितं, तत्प्रसीद, यन्मया आर्यवचनं न प्रतिकूलितं तथा आर्योऽपि एतदेकं वचनं कुर्वन् अनु गृह्णातु मां मन्दभागिनीम्।

( २ ) कुत्र कुत्र अमात्यस्तिष्ठति। आर्य इतस्तावत् भव।

देव्यास्समीपं ? ( हितं ) सम्पादयन्त्याः पुरस्सरो भवामि, यतो मयैव सर्वमेवेदमनुष्ठितम् ।

वासवदत्ता—कधं तुए विणा अय्यउत्तो । ( १ )

यौगन्धरायणः—देव्यैव बिना कथमिति निरूपयतु देवी, मद्विधास्तु भृत्यपरमाणवो न विचारणीया एव ।

( वासवदत्ता उत्तिष्ठति )

यौगन्धरायणः—( उत्थाय ) इत इतो देवी ।

( इति परिक्रामतः )

वासवदत्ता—( पुरोऽवलोक्य;) एसा वेणिआ, करेअदु तावन्मे चितां । ( २ )

यौगन्धरायणः—( सवितर्कं ) किमत्र करोमि । ( पुरोऽवलोक्य ) कथमयं रुमण्वदनुचरो विनीतकः ।

( ततः प्रविशति विनीतकः )

विनीतकः—( उपसृत्य ) अमात्यो भणति ( कर्णे एवमेव । )

यौगन्धरायणः—( जनान्तिकं ) यथाह स्थपतिपुत्रः, प्रारब्धमेवेदमद्यैव देवीसमर्पणं, तत्त्वमपि त्वरितमागच्छेति । ( प्रकाशं ) विनीतक विरचय चिताम् ।

विनीतकः—( यौगन्धरायणस्य मुखं दृष्ट्वा ) जं अमच्चो आणवेदि ( ३ )

( इति निष्क्रान्तः )

यौगन्धरायणः—देवि यावत्समाह्रियन्ते दारूणि तावदुपविश्य प्रतिपालयावः ।

वासवदत्ता—अय्यो जाणादि । ( ४ )

( नाट्येन तथा कुरुतः )

( नेपथ्ये कलकलः )

यौगन्धरायणः—( आकर्ण्य स्वगतं ) यथायमितस्तत आक्रन्दपरः पर्याकुलः प्रधावति लोकः स्तथा तर्कयामि व्यवसितं वद्मावत्या तद्देवेनेति ।

वासवदत्ता—( आकर्ण्य ) अय्य दारुणो अक्कन्दो सुणीअदि । ( ५ )

( १ ) कथं त्वया बिना आर्यपुत्रः । ( २ ) एषा वेणिका, कारयतु तावन्मे चितां ।
( ३ ) यदमात्यः आज्ञापयति । ( ४ ) आर्यो जानाति ।
( ५ ) आर्य दारुणः आक्रन्दः श्रूयते ।

यौगन्धरायणः—देवि सुलभाक्रन्दैवेयं भूमिः ( पुरोऽवलोक्यात्मगतं ) अये कथं वेणिकामनुसरन् वसन्तकेन अनुगम्यमान इत एवाभिवर्तते देवः। ( सविशेषसकरुणं ) अहो नु खलु भोः ।

केशान्वारिमुचश्शुचेव विगलद्बाष्पान्दधात्याकुलान्
मागध्यानुगतो विविच्युरनलं लक्ष्म्येव संभ्रान्तया ।
वत्सेशस्समुपैति दारुणतरं नीतो दशां मत्कृते
यत्सत्यं न मयापि बुध्यत इदं किं दुर्नयैः किं नयैः ॥ २

( ततः प्रविशति पद्मावतीवसन्तकाभ्यामनुगम्यमानः स्नातो राजा )

राजा—हा देवि ।

त्वत्सम्प्राप्तिविलोभितेन सचिवैः प्राणा मया धारिताः
तन्मत्वा त्यजतः शरीरकमिदं नैवास्ति निस्स्नेहता ।
आसन्नोऽवसरस्तथानुगमने जाता धृतिः किं त्वियान्
खेदो यच्छतधा गतं न हृदयं तस्मिन्क्षणे दारुणे ॥ ३

विदूषकः—( स्वगतं ) सर्वमेतद्यद् वृत्तं जानामि, तथाप्येतद्वयस्यस्य व्यवसितं प्रेक्ष्य आविध्यत इव मे हृदयम्। भवत्वेवं तावत्। ( प्रकाशं सकरुणं ) भो वयस्य किं न प्रेक्षसेऽत्रभवतीं पद्मावतीं ।

राजा—( विलोक्य सविशेषकरुणं ) कथमनयापि व्यवसितं, अहोनु खलु भोः ।

विस्रम्भान्न विसर्पितं न च मनो निर्यन्त्रणं मन्त्रितुं
व्यावृत्तापि विवर्तिता न शयने बाष्पं त्यजन्ती शनैः ।
मामुद्दिश्य तथानया व्यवसितं तत्रोपरुद्धं शुचा
कष्टं केवलमेव राजतनया दग्धा वराकी मया ॥ ४

पद्मावती—अय्यउत्त कधं एसा भगवदी भाईरधी पिअसहीए विअ कालिन्दीए अणुगदा दीसदि, ता पेक्खदु णं अय्यउत्तो। (१)

विदूषकः—अहो से महाणुभावाए धीरत्तणं हिअअस्स। (२)

राजा—प्रिये पद्मावति।

अयं गङ्गायमुनयोश्चेतोनिर्वृतिकारणम्।
आसन्नमिह पश्यामि भवत्योरिव तङ्गमम्॥ ५

(परिक्रामतः)

वासवदत्ता—(स्मरणं रूपयित्वा) हद्धि ईदिसे देसआले मए पिअसही कञ्चणमाला ण दिट्ठा। (३) (इति रोदति)

यौगन्धरायणः—देवि प्रत्यासन्न एव ते मनोरथः किमद्यापि रुद्यते।

वासवदत्ता—तदा त्वयोज्जयिनीं प्रति प्रेषितवती काञ्चनमाला विपद्यन्त्यापि ? मया न दृष्टा बला...वर्तते मे बाष्पसलिलं। (इति रोदति)

(ततः प्रविशत्यपटाक्षेपेण काञ्चनमाला)

काञ्चमाला—(सकरुणं) हा धिक्, इतः प्रत्यासन्नात् रुमण्वच्छिबिरात् त्वरयन्ती आगतास्मि। या ? यावत्पुरतो तदा गृहान्निस्सरन्त्या मन्त्रितमेव देव्या मरणेच्छया प्रस्थितेति श्रुतं मया, तद्यावदेतस्मिन्नवसरेऽवहिता भवामि। (सास्रमुपसृत्य पादयोः पतति)

वासवदत्ता—अम्हो कञ्चणमाला। (४) (गाढमालिङ्ग्य रोदिति)

यौगन्धरायणः—समाश्वसिहि समाश्वसिहि।

काञ्चनमाला—अध कहिं भट्टा। (५)

(१) आर्यपुत्र कथमेषा भगवती भागीरथी सियसख्या इव कालिन्द्या अनुगता दृश्यते, तत् पश्यतु (तां ?) आर्यपुत्रः।

(२) अहो महानुभावायाः धीरत्वं हृदयस्य।

(३) हाधिक् ईदृशे देशकाले मया प्रियसखी काञ्चनमाला न दृष्टा।

४) अहो काञ्चनमाला। (५) अथ कुत्र भर्ता।

वासवदत्ता—( सविशेषकरुणं ) काञ्चनमाले साम्प्रतं त्वं धन्या, यया आर्यपुत्रो न दृष्टः, मया पुनः कठिनहृदयया दृष्टं यत्प्रेक्षितव्यम् ।

यौगन्धरायणः—( स्वगतं ) अहो देवः प्रतिरूढप्रणयो देवीमायासयति ।

काञ्चनमाला—देवि पद्मावत्यपि देव्या दुःखमुत्पादयति, सा धु? तव लाभनिमित्तमेव परिणीतेति श्रूयते ।

वासवदत्ता—अपेहि, किं एत्थ पदुमावदीए ण किंचि अहं भणिदव्वा । ( १ )

यौगन्धरायणः—देवि युक्तमाह कांचनमाला ।

वासवदत्ता—( तदनादृत्योत्थाय विलोक्य ) अम्हो संजलिदो भअवं हुदवहो । जाव णं गदुअ-पदक्खिणी करोमि ( २ ) ( तथा करोति )

राजा—वयस्य यावदहं स्नातुमवतरामि तावद्विरचय चितां ।

विदूषकः—भो एव्वं ववसिदम्ह-दे ण को इह अण्णं करेदि ( ३ )

राजा—( स्वगतं ) यद्येवमचिरस्नात एवाहं, किममुना भूयः स्नानन्तरेण, ( पुरोऽवलोक्य सहसा ) तदियं ? नातिदूर एव कैरपि समेधितो भगवान् पावकः तदत्रैवात्मानं प्रक्षिपामि ।

( नाट्येन सत्वरमुपसृत्य चितां प्रदक्षिणीकरोति )

वासवदत्ता—अय्य धूमांधआरेण ण फुडं विभावीअदि, मणुस्सो विअ चिदं पादाहिणीं करोदि । ( ४ )

यौगन्धरायणः—( दृष्ट्वा स्वगतं ) अये कथं देव एव, ( निगूढान्तः परितोषेण ) देवि धीरा भव, नामहस्यात्मनं प्रक्षेप्तुं ददामि ।

वासवदत्ता—तेण हि तुरिदं निवारेदु णं अय्यो । ( ५ )

यौगन्धरायणः—( धूमान्धकारं नाटयित्वा उपसृत्य जानुभ्यां स्थित्वा ) भो राजन् इयमस्माकं स्वसा भर्तृदुःखमसहमाना मतु मुद्यता, तदेतच्चितापरित्यागेन अस्मत्स्वसारमभ्युपपद्यतां देवः ।

---

( १ ) अपेहि । किमत्र पद्मावत्या न किञ्चिदहं भणितव्या ।

( २ ) अहो संज्वलितः भगवान् हुतवहः, यावत् तं गत्वा प्रदक्षिणीकरोमि ।

( ३ ) भोः एवं व्यवसितास्मः, तव न क इह आज्ञां करोति ।

( ४ ) आर्य धूमान्धकारेण न स्फुटं विभाव्यते, मनुष्य इव चितां प्रदक्षिणीकरोति ।

( ५ ) तेन हि त्वरितं निवारयतु तं आर्यः ।

राजा—( निश्वस्य ) ब्रह्मन्नेष स्थितोऽस्मि।

विदूषकः—( सत्वरमनुसृत्य ) भो वयस्स अवि परिआणासि एदं बह्मणं। ( १ )

राजा—( चिरं निर्वर्ण्य सास्राकुलं ) न खलु, सखा मे यौगन्धरायणः।

विदूषकः—भो सो एव्व एसो, उवरदोत्ति ण मे वाआ पसरदि। ( २ )

राजा—कृतं सन्देहेन, स एवायं, ( इत्यालिङ्गति )

पद्मावती—( वासवदत्तां दृष्ट्वा ) अहो सैव मे प्रियसखी त्वरितं व्यवसिता, ( उपसृत्य परिष्वज्य च ) पिअसहि ( किं ) णेदं। ( ३ )

वासवदत्ता—( सास्राकुलं ) अहं पिअसहिं पुच्छामि किं णे दन्ति। ( ४ )

पद्मावती—एष आर्यपुत्रोऽमात्यैः किमपि विप्रलब्धोऽस्मीति भणित्वा तामार्यां वासवदत्तामुद्दिश्य मर्तुं व्यवसितः।

वासवदत्ता—( स्वगतं ) हा धिक् एवं व्यवस्यता आर्यपुत्रेणैव विलीनशल्यं हृदयादपनीयाहमेव विलक्षीकृता।

यौगन्धरायणः—जयतु जयतु देवः।

राजा—( सास्रं अश्रद्धदिव ) सखे यौगन्धरायण किमेतत्।

यौगन्धरायणः—पाञ्चालोच्छित्तये सर्वमेवेदमपराद्धमस्माभिः, तदियं देवी वासवदत्ता देवं प्रसादयति।

राजा—( ससम्भ्रमोत्सुकं ) सखे कथय क्वासौ क्वासौ।

विदूषकः—भो एसा देवी पुढमं एव्व देवीए पदुमावदीए सम्भाविदा, ता उवसप्पदु भवं। ( ५ )

राजा—नाहमुत्सहे निरपत्रपो देवीं द्रष्टुम्।

विदूषकः—( वासवदत्तासमीपमुपसृत्य ) भोदि उपसप्पदु पिअवअस्सं। ( ६ )

वासवदत्ता—अयं दीर्घवियोगदुःखं विषह्य न खल्वार्यपुत्रस्य मुखं पारयामि।

पद्मावती—( सविस्मया स्वगतं ) कथमेषा देवी वासवदत्ता, ब्राह्मणीति कृत्वा मया

( १ ) भो वयस्य अपि परिजानासि एतं ब्राह्मणं।

( २ ) स एव एषः उपरत इति न मम वाक् प्रसरति।

( ३ ) प्रियसखि ( किं ) इदं। ( ४ ) अहं प्रियसखीं पृच्छामि किमिदमिति।

( ५ ) भोः एषा देवी प्रथममेव देव्या पद्मावत्या सम्भाविता, तदुपसर्पतु भवान्।

( ६ ) भवति उपसर्पतु प्रियवयस्यं।

प्रियसखीभावेन परिभूता, (प्रकाशं पादयोर्निपत्य) प्रसीदतु मे देवी, यन्मया परमार्थमज्ञात्वा प्रियसखीत्याहूता।

वासवदत्ता—अयि महानुभावे उट्ठेहि, सही एव्व दे अहं, मा मं अण्णधा सम्भावेहि। (१)

विदूषकः—कंचनमाले दुवे वि एदे अणोण्णलज्जा ? ण उपसप्पन्ति, ता एहि विगलिअलज्जा परोप्परं परिस्सअम्ह ?। (२) (इत्यालिङ्गति)

काञ्चनमाला—(किञ्चिद्बाष्पाकुला) अयं विस्मृतं स्मारितास्मि परिहासम्।

राजा—(विहस्य) सखे यौगन्धरायण प्रसादय कोपनाम्।

यौगन्धरायणः—देवि किमिदं।

पद्मावती—देवि उत्ताम्यत्यार्यपुत्रः।

वासवदत्ता—(उपसृत्य) जयतु जयतु आर्यपुत्रः।

राजा—(सास्रं) देवि किं ब्रवीषि।

यथातथा घृतप्राणं निस्स्नेहं निरपत्रपम्।
आनन्दामृतवर्षिण्या दृष्ट्याप्यनुगृहाण माम्॥ ६

विदूषकः—भो तदा भणितोऽस्यवश्यं प्रियवयस्यो देवीं प्रसादयिष्यतीति।

राजा—अये माणवकः, अयमप्यत्रैव।

यौगन्धरायणः—अयमेवात्र प्रथमः।

राजा—स्नेहात्कार्यदर्शी संवृत्तोऽसि, तत्कथय साम्प्रतं किमिदमिति।

विदूषकः—(कर्णे) एव मेव, (सहासं) भो अदो एव्व मए तदा भणिदं जधा अहं पसुत्तो देवीए एव्व पडिबोधिदोम्हित्ति। (३)

(राजा यौगन्धरायणमुखं पश्यति)

यौगन्धरायणः—यथाह वसन्तकः।

राजा—अहो नैपुणममात्यानाम्। पद्मावति किञ्चित्त्वया नापराद्धं देव्याः।

---

(१) अयि महानुभावे उत्तिष्ठ, सख्यैवाहं, मा मां अन्यथा सम्भावय।

(२) काञ्चनमाले द्वावपि एतौ अन्योन्यं लज्जा (लज्जया) नोपसर्पतः, तदेहि विगलितलज्जौ परस्परं परिहसावः ?। (३) भोः अत एव मया तदा भणितं यथा-अहं प्रसुप्तः देव्या एव प्रतिबोधितोऽस्मीति।

पद्मावती—अय्यउत्त अस्थि मे अवराधो, जं मए अआणंतीए पिअसहि त्ति आलत्ता (१)

विदूषकः—भवति किमेवं प्रतिपत्तिमूढा तिष्ठसि नालपसि प्रियवयस्यम्।

वासवदत्ता—( सलज्जाकरुणं ) अय्य किन्ति कढिणहिअआ आलवामि, मए अमच्च वअणं पडिवालअन्तीए एदं अवत्थं णीदो अय्यउत्तो। (२)

( ततः प्रविशति रुमण्वान् )

रुमण्वान्—( उपसृत्य ) विजयतां देवः।

राजा—अये कथं रुमण्वान्, आर्य स्वागतं, एह्येहि। ( इति परिष्वजति ) अपि गृहीतः स दुरात्मा पाञ्चालहतकः।

रुमण्वान्—अव्याहतं देवस्य तेजः। इतश्च नातिदूरे संयतस्तिष्ठत्यारुणिः, अहमपि सांकृत्यायनीसन्देशात्त्वरितमागतः।

राजा—किं भ्रियते भगवती।

रुमण्वान्—देव, किं कश्चिदत्रोपरतः, इदं हि कार्याभिमुखैः पाञ्चालकनाशहेतो-रस्माभिर्देवीं परिबोध्य व्यवसितम्।

राजा—साधु सचिवाग्रेसर साधु।

श्लाघ्या धीर्धिषणस्य रावणवशं यातः सुराणां पतिः
सर्वं वेत्त्युशना रसातलमहाकारान्धकारे बलिः।
इत्यत्माननवेक्ष्य वैरिविजयप्राप्तौ कृतो निश्चयो
मासत्यं तु विहाय य१ (वे) त्तु युवयोर्लोकस्तयोश्चान्तरम्॥७

रुमण्वान्—देव कैवयमस्यास्तुतेः।

भिनत्ति ध्वान्तसन्तानं भास्वानेवोदयस्थितः।
व्यतिरेकः कराणां तु न बुधैरवगम्यते। ८

---

( १ ) आर्यपुत्र अस्ति ममापराधः, यन्मया अजानन्त्या प्रियसखीति आलपिता।

( २ ) आर्य किमिति कठिन हृदया आलयामि, मया अमात्यानां वचनं प्रतिपाल-यन्त्या एतामवस्थां नीत आर्यपुत्रः।

तदितो गोपालपालकौ दर्शकं च सभाजयितुं कौशाम्बीमेव प्रतिष्ठतां देवः। देव उच्यतां किं ते भूयः प्रियमुपकरोमि।

राजा—रुमण्वन् नातः परमपि प्रियमस्ति, पश्य

दृष्टा यूयं निर्जिता विद्विषन्तः
प्राप्ता देवी भूतधात्री च भूयः।
संबन्धोऽभूद्दर्शकेनापि सार्धं
किं दुष्प्रापं यन्न लब्धं भवद्भ्यः॥ ९

तथापीदमस्तु

आम्नायार्थविभाविनः प्रतिदिनं नन्दन्तु विप्राः परं
स(द्य)स्तावदमी भवन्तु सुखिनो यावद्धरित्रीधराः।
भृत्याः प्रौढ .... .. .... ....
.. .... .. .... १० (१)

( इति निष्क्रान्तास्सर्वे )

षष्ठोऽङ्कस्समाप्तः



(१) आशीः पद्ये उत्तरार्धं मातृकायां लुप्तम्।